श्रीमदुडुपिभण्डारकेरिमठाधीशश्रीविद्यामान्यतीर्थ-

श्रीचरणविरचिता

# अद्वैततत्त्वसुधासमीक्षा

( प्रथमो भागः )

प्रकाशिका :-

माध्वराद्धान्तसंवर्धिका सभा, उडुपि.

॥ श्रीः ॥

स्वस्तिश्रीमत्परमहंसेत्याद्यनेकबिरुदाङ्कित-

श्रीमदुडुपिभण्डारकेरिमठाधीशश्रीविद्यामान्यतीर्थ-

श्रीचरणविरचिता

सहस्रदूषण्यपरपर्याया

# अद्वैततत्त्वसुधासमीक्षा

(प्रथमो भागः)




प्रकाशिका :-

माध्वराद्धांतसंवर्धिका सभा

उडुपि



प्रथमो हनुमान्नाम द्वितीयो भीम एव च ।
पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः ॥

# भूमिका

—※—

अयि सहृदया विबुधाः !

श्रीमदनन्तकल्याणकगुणाकरो जगज्जन्मादिनिदानं भगवान् श्रीमन्नारायणः सृष्ट्यादौ नाभिकमलजातं श्रुतिजातमुपदिदेश। सच पुनः महर्षीन् सनकादीन् ग्राहयामास श्रुतिततीः । एवं क्रमेण ता अधिधरणि विकस्वराः प्रससुः । अनया परिपाट्या बहुतिथेऽनेहसि व्यतियाते, युगद्वये च परिवृत्ते द्वापरे भूम्ना निमीलति, स एव परमदयालुः परमात्मा लोकानामायुर्बलमेधाद्यपचयं परिलक्ष्य तान् संसाराटव्यटनसंकटात् उन्मुमोचयिषुः सत्यवत्यां पराशराद् भुवमिमामवततार । अवतीर्य च वेदतरोः काश्चिदेवशाखा ऋग्यजुस्सामाथर्वाभिधा भुवि पैलजैमिनिवैशम्पायनसुमन्तुप्रभृत्यनूचानशिष्यप्रशिष्यपरम्परया लब्धप्रतिष्ठा अकार्षीत् । तथाऽपि प्रसर्पताऽऽसन्नेन करालकलिकालकालिम्ना तासां श्रुतिशाखानामपि दुरवगाहतां समीक्ष्य वेदार्थाभिधायकपुराणप्रणयनेन सुग्राहतां सम्पाद्यापि, अरालामायतिमभिसन्धाय, कुतोऽपि समुन्मिषितानि आम्नायानुपजीवीनि नानाप्रस्थानानि प्रत्यवस्थातुं तदुपजीवीनि प्रतिष्ठापयितुञ्च श्रुत्यर्थनिर्णायकानि विचिकित्सोत्सारकाणि ब्रह्मसूत्राणि प्रणिनाय ।

कालक्रमेण बहुभिर्व्याख्यातृभिर्वैविध्येन व्याख्यातानि विवक्षितार्थानभिधायीनि सुजनमानसोद्वेजकानि तानि सूत्राणि लोकं लोकं कारुण्या

र्णवो नारायणस्तद्यथार्थालोकेन लोकलोचनानि तत्त्वग्रहणनिपुणानि विधित्सुस्तदर्थसमर्थं समीरमीरयामास । स च पवमानः भगवत्परशुरामपरिनिर्मिते पश्चिमपारावाररोधसि पाजकाभिधे क्षेत्रे मध्यगेहभट्टाख्य-द्विजतल्लजात्मजत्वेनावतीर्य श्रीमदानन्दतीर्थपूर्णप्रज्ञमध्वादिनामभिरञ्जसा पप्रथे । स च पवमानावतारो मध्वाचार्यस्तत्पूर्वजानि अतत्त्वार्थाख्यायीनि एकविंशतिभाष्यव्यपदेशानि व्याख्यानानि श्रुतिहृदयप्रकाशकैः सत्तर्ककर्कशैः वचनजातैरपास्यन् प्राञ्जलया वाग्वैखर्या तानि ब्रह्मसूत्राणि व्याचख्यौ ।

श्रीमन्न्यायसुधाकाराः जयतीर्थश्रीचरणाः ब्रह्मसूत्रे श्रीमदानन्दतीर्थभगवत्पादाचार्यभाष्यमेवमवतारयामासुः — "भगवता बादरायणेन प्राणिनां निःश्रेयसाय प्रणीतमपि ब्रह्म-मीमांसाशास्त्रमसाधुनिबन्धान्धतमसावगुण्ठितत्वेनाप्रणीतमिव मन्यमानो भगवानानन्दतीर्थमुनिर्ग्रन्थाचार्याभिप्रायमस्य भाष्यं विधाय अनुभाष्यमपि विरचयामास" — इति । कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्यात्मजनारायणपण्डिताचार्याः — "इत्यर्थितो व्यधान्मध्वः सोऽनुव्याख्यां सतां सुधाम् । दुर्वादिगर्वाद्रिपविं मायिध्वान्तरविद्युतिम् ॥" इति शश्लाघिरे । श्रीमदानन्दतीर्थभगवत्पादाचार्या अपि—"ग्रन्थोऽयमपि बह्वर्थो भाष्यञ्चात्यर्थविस्तरम् । बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः ॥" इति भाष्यानुव्याख्यानयोः गाम्भीर्यं प्रतिजानते स्म ।

अतस्तादृग्दुरवगाहानुभाष्यविशेषार्थं व्याचिख्यासवः श्रीटीका-

कृत्पाद-बिरुद्भाजः श्रीमज्जयतीर्थयतिवराः "चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः । गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥" इत्यादिना तत्परवर्तिभिः चन्द्रिकादिप्रौढप्रबन्धपरिवृढैः श्रीमद्व्यासतीर्थश्रीचरणैः संश्लाघितां, श्रीमन्न्यायसुधाख्यामदभ्रार्थगर्भां कृतिं न्यबध्नन् । ते च साक्षात्कृतनिखिलनिगमागमपारावारपरपारा अपि श्रीमदानन्दतीर्थभगवत्पादेषु विशेषतो भक्तिभावप्रह्वाः "न शब्दाब्धौ गाढाः नच निगमचर्चासु चतुराः, नच न्याये प्रौढाः, नच विदितवेद्या अपि वयम् । परं श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणिं प्रपन्ना मान्याः स्मः किमपिचवदन्तोऽपि महताम् ॥" इति श्रीमन्न्यायसुधोपक्रमे स्वीयमादरभरं प्रादुरभावयन् । श्रीमज्जयतीर्थचरणैरयं निबन्धतल्लजः इतः प्रायेण षट्शताब्दीतः प्राग् श्रीमदानन्दतीर्थाचार्येतः शताब्दीद्वयीतः परतो न्यबन्धि ।

इदमप्यत्रैतिह्यमुपलभ्यते यद् विजयनगरसाम्राज्यसंस्थापकाः नैकविधकृतिकृतिनः श्रीविद्यारण्येतिसुगृहीतनामधेया विलक्षणविचक्षणा गुणलुब्धाः सन्तः इमां श्रीमन्न्यायसुधां करिवरपृष्ठे समारोप्य शोभायात्रां कारयामासुरिति । तथैव युक्तिमल्लिकादिग्रन्थमतल्लिकाप्रादुर्भावभव्यदिव्यानल्पकल्पनाकल्पतरवः श्रीमद्वादिराजतीर्थश्रीचरणाः, कलियुगे भक्ताभीष्टप्रदानेन कामधेनुरिति समभिष्टुतमहामहिममण्डिताः श्रीराघवेन्द्रतीर्थश्रीपादा एवमन्येऽप्यग्रिमिरूपरूपाः श्रीमन्न्यायसुधां व्याख्याय तद्गाम्भीर्यमञ्जसा प्राचीकटन् । व्याख्यातारः — "प्रत्यक्षरं प्रतिपदमनेकाकूतगर्भिता । प्रतिभाति सुधाऽथापि ग्रन्थाल्पत्वाय नो-

च्यते" इति समुद्घोषयन् । 'सुधा वा पठनीया वसुधा वा पाल-नीया' इति गाथाऽपि श्रीमन्न्यायसुधाविषये प्रथत एव । श्रीसुधा-ग्रन्थपरिमितिस्तु द्विशताधिकसहस्रपृष्ठात्मिका । परं न तत्र पौनरुक्त्य-गन्धः, नास्पष्टार्थता, नवा युक्तिशैथिल्यम्, श्रुत्यर्थव्यर्थता । तद्व्याख्यानशैलीयं नानाशास्त्रावगाहननिपुणान् धिषणधिषणनिभानपि चकितीकुरुते ।

तामिमां न्यायसुधां परीक्षितुं प्रवृत्तानद्वैततत्त्वसुधाकारान् अद्धा निध्याय प्रसभमियं भणितिः"घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः" स्मृति-पथमध्यमध्यास्ते । परग्रन्थदूषणाय बद्धकच्छपुच्छं स्वच्छन्दं धावतां शास्त्रिणामद्वैततत्त्वसुधायामितस्ततो लुठतः स्वव्याघातान्, अकाण्डे उन्मीलन्तम् अनुक्तोपालम्भम्, अर्थविधुरं वाग्डम्बरम्, पदे पदे कृतास्पदं पुनरुक्तिस्तोमञ्च समीक्षमाणानां गुणगृह्याणां मनीषिणामक्षिसमक्षं परी-क्षार्थमुपक्षिप्ते ग्रन्थयुगेऽस्मदुक्तं कृत्स्नमिदं विश्लेषणं स्वरसतो भासेतै-वेति विरमामोऽनल्पकथनात् ।

अस्माभिरद्वैततत्त्वसुधायाः समीक्ष्यास्ताः पङ्क्तयः सम्यगवधाय तथैवोद्धृताः । तत्र प्रतिभासमाना अस्तव्यस्तता असम्बद्धताश्च तत्र तत्र ग्रन्थकर्तुः परप्रस्थानप्रत्यवस्थानजङ्घालतां द्योतयन्ति । न वयं तत्र स्वलेखनीं व्यापारयितुमभ्यलषाम । अस्यां शास्त्रिकृतौ परस्सहस्रदूषण-विशिष्टायां सहस्रसंख्याकानि दूषणानि मनीषिशेमुषीतोषकाणि सोपपत्ति समुद्भावयितुं कृतसन्धाः स्मः ।

तत्र तावत् अस्मिन् भागे दूषणानां प्रायेण शतत्रयी विन्यस्ता, पुनरचिरात् प्रकाशयिष्यमाणे द्वितीयभागे ह्यवशिष्टानि दूषणान्युल्लिखिष्यामः । तज्ज्ञविज्ञैः शुल्कमन्तरेणैव पुस्तकमिदं निर्दिष्टसङ्केतात् प्राप्येत । अपक्षश्रयिणः प्रेक्षावन्तः परीक्षकेक्षणेन परीक्ष्य कृतिमिमां स्वमनीषितं अस्मान् अवगमयन्तु ।

पर्यन्ते चास्मत्समीक्षामीक्षमाणान् विचक्षणान् इदं विवक्षामः यत् तेऽत्र 'गच्छतः स्खलनं क्वापी'त्युक्तदिशा समापतितास्त्रुटीरुपेक्ष्यास्मदाशय एव दत्तेक्षणा मरालपटिमानमाविष्कुर्वन्त्विति । किञ्चात्रास्मत्कृतौ विपश्चितां यत्र क्वापि विचिकित्सा समुन्मीलति तत्र ते महाभागा अस्मानुपेत्य लेखनद्वारा वा सूचयन्ति चेत् सहर्षं वयं तत्र तान् तोषयितुं नूनमवदध्महे । अद्वैततत्त्वसुधाकारः मौखिकविचारार्थं अस्माभिरामन्त्रित आसीत् । परन्तु इदानीं मौखिकविचारोपयोगिसमयबन्धनियमनविषये पत्रप्रतिपत्रव्यवहारः प्रचलति ।

पर्यन्ते च सर्वान्तर्यामी नारायणोऽनेन कर्मणा प्रसीदतु ।

श्रीविद्यामान्यतीर्थाः

—∗—



प्रथिताप्रतिहतप्रतिभावैदुष्याः निजतेजोविशेषवशीकृताशेषजनमानसा

अस्मद्दीक्षागुरवः श्रीमदद‍मारुमठाधिपतिश्रीविबुधप्रियतीर्थश्रीचरणाः ।



विविधानवद्यविद्यारण्यान्तस्सञ्चारिणः वादीभकण्ठीरवाः
विश्रुतौदार्यवैदुष्याः अस्मद्विद्यागुरवः श्रीसत्यध्यानतीर्थश्रीचरणाः ।

श्रीः

# अद्वैततत्त्वसुधासमीक्षा

—※—

श्रीहनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः

॥ श्रीगुरुभ्यो नमः ॥

**"करोतु मम कल्याणं हरिर्हयमुखाभिधः ।**
**गुरुश्च मध्वनामा मे वरदोऽस्तु निरन्तरम् ॥"**

इष्टसाधनताज्ञानात् कृत्यसाध्येऽपि कर्मणि ।
प्रवर्तमानः पुरुषः सुधीभिरुपहस्यते ॥
वसुधायां '**सुधा**'ध्यायी सुधाशनसमो भवेत् ।
तामन्यथा जिघृक्षन् हि प्रत्यवैति सुरापवत् ॥

'**अद्वैततत्त्वसुधा**'**कारः** '**द्वैताद्वैतयोरिमे अविप्रतिपन्ना-विषयाः**' इति प्रतिज्ञां विदधानस्तानेतान् विषयानेवमुद्दिशति – "**वेद-नित्यत्वम्**[1] । **तत्स्वतःप्रामाण्यम्**[2] । **ब्रह्मणस्तन्मात्रगम्यत्वम्**[3] । **ब्रह्मनिर्दोषत्वम्**[4] । **सगुणस्य अवान्तरतात्पर्यविषयता**[5] । **धर्मा-धर्मयोः वेदैकगम्यत्वम्**[6] । **तदनु-(वेदानु)यायिस्मृतिपुराणेति-हासादिमात्रप्रामाण्यम्**[7] । **वेदानामपौरुषेयत्वम्**[8] ।" इति । अत्र

सर्वत्रैकैकशः सुस्फुटायामपि विप्रतिपत्तौ अविप्रतिपत्तिकथनं सुतरामसङ्गतमित्यधस्तान्निर्दिश्यते, आशास्यते च निरपेक्षप्रेक्षावन्तोऽत्रावधाय परीक्षिष्यन्ते इति ॥

तथाहि — (१) वेदानां ज्ञाननिवर्त्यत्वमभ्युपयन्तोऽद्वैतिनः वेदनित्यत्वविषये सर्वथा ह्यनिवर्त्यत्वमुररीकुर्वाणैः द्वैतिभिः समं समकक्षाः कथं सम्पद्यन्ताम्?

(२) ३८ तमे पृष्ठे **"शुद्धस्य शब्देन बोधनस्यैवाभावात्"** इति स्वयं समुद्घोषयन् त्रैकालिकाबाध्यविषयकज्ञानजनकत्वरूपप्रामाण्यं द्वैतिभिरङ्गीक्रियमाणं क्वाप्यनङ्गीकुर्वन् प्रामाण्यविचारे द्वैतिभिः समं समतामाप्तुं कथमुत्सहते?

(३) अत एव "तत्त्वभूतं शुद्धं ब्रह्म वेदगम्यं न भवत्येवे"ति प्रतिज्ञाय ब्रह्मणः वेदमात्रगम्यत्वे द्वैतिसाम्यं काङ्क्षन् स्वव्याहतभाषणात् स्तोकमपि कथं न विभेति?

(४) १२१ तमे पृष्ठे **"ब्रह्मनिर्विशेषत्वं निर्दोषत्वं चेत्यनर्थान्तरम्"** इति शीर्षके निर्दोषत्व-निर्विशेषत्वयोरैक्यं प्रतिपादयन् निर्दोषशब्दस्य अपकर्षप्रयोजकधर्मराहित्यं अर्थं व्याचक्षाणानां द्वैतिनां तुलां कथमारुरुक्षति?

(५) सगुणस्यैव सकलश्रुतिमुख्यतात्पर्यविषयतां प्रतिपादयत्सु द्वैतिषु स्वदन्तकल्पितावान्तरतात्पर्यविषयतां सञ्जल्पन् द्वैतिनोऽप्यत्र

प्रसह्य समाकर्षन् अहो! **"स्वयं नष्टः परान् नाशयति"** इति न्यायं कृतार्थयति ॥

(६) ११० तमे पृष्ठे **"जडानामतीन्द्रियाणामनुमानैकगम्यानां भेदोऽपि"** इति कण्ठतः कथयन् अतीन्द्रिययोरेव धर्माधर्मयोः अन्यास्तिकसिद्धान्तिवत् वेदैकगम्यत्वं वाञ्छन् **"उद्बाहुरिव वामनः"**, कुतो बुभूषति ?

(७) ९७ तमे पृष्ठे **"अद्वैतसिद्धान्ते हि ब्रह्मसत्यत्वश्रुतिः, प्रपञ्चसत्यत्वश्रुतिः, तत्प्रत्यक्षादिकम्, किं बहुना, 'इदं रजतम्' इत्यादिज्ञानमपि यावद्बाधं प्रमाणम्।"** इति निगदन् यावद्बाधं सौगतमतस्यापि प्रामाण्यमभ्युपैति इत्यवधार्यते, एवञ्च वेदाननुयायिमतस्य प्रामाण्याङ्गीकारेण [1]द्वैतिभिस्तथा प्रामाण्यस्य कादाचित्कत्वानभ्युपगमात् तैः सह संवादमत्रापि नार्हत्येव ॥

(८) **'शास्त्रयोनि'**सूत्रे शाङ्करभाष्ये प्रथमवर्णके वेदादिशास्त्रकारणत्वं ब्रह्मणि प्रत्यपादि। एवमेव **'ब्रह्माक्षरसमुद्भवम्'** इति गीतावाक्यव्याख्यानेऽपि **'ब्रह्म = वेदः, अक्षरसमुद्भवम् = ब्रह्मोत्पन्नम्"** इति व्याख्यायि । इत्थञ्च अद्वैतिभिर्वेदानां ब्रह्मोत्पन्नत्वस्वीकारात् द्वैतिभिश्चोत्पत्त्यनङ्गीकारात् तत्रापि द्वैतिभिः साकमविप्रतिपत्तिर्दुर्घटैव ॥

---

[1] द्वैतिनस्तु – बाधपर्यन्तमपि प्रामाण्यभ्रम एव, नतु प्रामाण्यम् – इत्यभ्युपयन्ति ॥

(९) "**भेदस्य प्रमाणान्तरसिद्धत्वेन मिथ्यात्वम्**" इति शीर्षकमायोज्य तदधस्तात् विप्रतिपत्तिमात्रप्रदर्शनं प्रतिज्ञातार्थासम्बन्धादसङ्गतम् ॥

(१०) द्वैत्यद्वैतिनोर्विप्रतिपत्तिं प्रदर्शयितुमुपक्रममाणः "**निर्विशेषस्य वेदमुख्यतात्पर्यविषयत्वम्**" इत्येतत् स्वमतासाधारणविषयत्वेन समुल्लिख्य पुनः स्वयमेव कानिचित् पदानि गत्वा "**निर्विशेषतत्त्वस्य शब्दाबोध्यत्वम्**" मुक्तकण्ठं समर्थयमानः वेदमुख्यतात्पर्यविषयताया वन्ध्यात्वं समुद्धोषयति ॥

(११) किञ्च तत्त्वस्य निर्विशेषत्वमनूद्य मुख्यतात्पर्यविषयत्वप्रतिज्ञा "**मम जिह्वा नास्ती**"ति कथनं साध्वनुसरति ॥

(१२) विप्रतिपत्त्यन्तरम् - **भेदस्याऽऽविद्यकत्वेन अनर्थकारिता अद्वतिमते,** इत्यभिधाय पुनः १४२ तमे पृष्ठे **सविशेष-**"**ब्रह्मोपासनमपि श्रवणादिकमिव निर्विशेषब्रह्मसाक्षात्कारे अन्तरङ्गसाधनमित्येवावगम्यते**" इति ब्रुवाणः पूर्वापरनिजवाक्ययोः स्फुटप्रतिभासमानं व्याघातं न गणयति ॥

(१३) "**निर्विशेषब्रह्मण एवापूर्वत्वम्**" इति शीर्षकमालिख्य, अधस्तात् तत्प्रघट्टके निर्विशेषस्य प्रमाणान्तरासिद्धत्वरूपाभियुक्ताभ्युपगतापूर्वत्वमसमर्थ्य उपासनार्थत्वाभावेनैव हेतुना मुख्यतात्पर्यविषयत्वसाधनमसम्बद्धमेव ॥

(१४) "अद्वैत० — निर्गुणं निरञ्जनम् इत्यादिश्रुत्या तत्र सगुणत्वस्यापि निषेधेनोपास्यतया श्रुत्यवगतानामसत्त्वेऽपि उपासनाया निर्वाहेण तत्सत्तायां प्रमाणाभावात्, श्रुतिबोधितानामप्युपासनामात्रार्थत्वेन तत्र तात्पर्याभावात् निर्विशेषं ब्रह्मैवाध्यारोपापवादन्यायेन वेदमुख्यतात्पर्यविषयः" इति ॥

समीक्षा — अत्र "सगुणत्वस्यापि" इत्यपिना ८६ तमे पृष्ठे "मिथ्यात्व-सत्यत्वयोः प्रपञ्चाभाव-तदभावरूपयोरपि प्रपञ्चबाधकज्ञानबाध्यत्वेन विरोधाभावात्" इत्युक्तदिशा निर्गुणत्वनिषेधः समुच्चीयते इत्यूह्यते, एवञ्च निषेधाविशेषात् सगुणवत् निर्गुणेऽपि वेदमुख्यतात्पर्यविषयता दूरं समुत्सारिता ॥

(१५) किञ्च गीतायां —

"एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥"

इति पार्थप्रश्नस्य उत्तरतया "अधिकारिविशेषस्यैव निर्गुणोपासनाधिकार" इति कृष्णेन उपादेशि इत्यद्वैतिभिः सिद्धान्तितम्, तथा च शास्त्रे निर्गुणब्रह्मणोऽपि अधिकारिविशेषकर्तृकोपासनार्थतया विनियोगात् यथा सगुणस्य श्रुत्यवगतत्वेऽपि उपासनार्थत्वेन तत्सत्तायां प्रमाणाभावः, तथैव निर्गुणस्यापि सिध्यत्येवेति निर्गुणब्रह्मणः वेदमुख्यतात्पर्यविषयत्वोपसंहारो नावसरत्येव ॥

(१६) अपरञ्च यावद्बाधं वचनानां प्रागाण्यस्य पूर्वोद्धृत-त्वदीयवाक्यैः उररीकारावगमात् ( निर्गुणब्रह्मसाक्षात्काररूप ) बाधस्य-एतावत्पर्यन्तमप्यसञ्जातत्वेन सगुणब्रह्मसत्तायां प्रमाणाभावात् इति व्याहरणं सुतरां व्याहतमेव ॥

(१७) अद्वैत० — २ पृष्ठे "**तत्र जीवत्वेश्वरत्वोपलक्षितसंविन्मात्रं परमार्थः, जीवेश्वरभेदादिकं सर्वं न परमार्थः, इति जीवेश्वरभेदाविरोध्येव ब्रह्मस्वरूपमद्वितीयं वेदान्तार्थः**" इति न्यगदि ॥

**समीक्षा** — अत्र संविन्मात्रस्य निर्धर्मकत्वात् परमार्थत्वम्, अपरमार्थव्यावृत्तिर्वा नाभ्युपेयते — तथापि "**संविन्मात्रं परमार्थः**" इति जल्पनं विप्रत्वरहितस्य '**अयं विप्रः**' इत्यभिधानार्हत्वकथनमिव प्रेक्षावदुपहास्यमेव ॥

(१८) अपरञ्च "जीवेश्वरभेदाविरोधिन एव वेदान्तार्थत्वाङ्गीकारात् जीवेश्वरभेदबोधकवाक्यानां सर्वथा अबाधितार्थत्वकथनमस्मदीय-मञ्जसा समर्थितम्" ॥

(१९) "**भेदप्रत्यक्षानुमानश्रुतीनामभेदश्रुत्यविरोधः**" इति शीर्षकार्थस्तदधस्तनैर्वाक्यकदम्बकैर्नैव समर्थितः ॥

(२०) अद्वैत० — "**तत्र जीवेश्वरभेदः प्रत्यक्षे जीवादौ प्रत्यक्षपरोक्षसाधारणभेदभानाविरोधाद् प्रमाणान्तरसिद्धः - इति तत्र वेदस्य न मुख्यं तात्पर्यम् ॥**"

**समीक्षा** — इत्यभिदधत् भवान् ३८ तमे पृष्ठे "**स्वप्रकाशतया स्वतःसिद्धे ब्रह्मणि**" इति वाक्येन शुद्धस्यापि ब्रह्मणः स्वतःसिद्धत्वाभ्युपगमात् वेदमुख्यतात्पर्यविषयतां निवारयत्येव । यदि स्वतःसिद्धेऽपि ब्रह्मणि अज्ञानावृतत्वात् तन्निवृत्त्यर्थं वेदमुख्यतात्पर्यविषयता सम्मता तर्हि तथैव जीवेश्वरभेदस्यापि वादिविवादग्रस्तत्वेन तन्निवारणार्थं जीवेश्वरभेदेऽपि वेदमुख्यतात्पर्यविषयता ह्यावश्यक्येव ॥

**(२१) अद्वैत० — यद्यपि ईश्वरे जीवादिभेदो न प्रत्यक्षसिद्धः, तथाप्यानुमानिकः स न विरुध्यते । ईश्वरः जीवाद्भिन्नः विरुद्धधर्मकत्वात् इत्यनुमानसम्भवात् अन्यथा नित्यपरोक्षाणामन्यतो भेदस्याप्रामाणिकत्वापत्तेः । अङ्गीक्रियते हि न्यायामृतादौ उक्तानुमानेन जीवेश्वरभेदसिद्धिः । अत एव निरपेक्षवेदैकगम्यधर्माधर्मयोर्भेदः । श्रुतिर्हि धर्माधर्मस्वरूपमात्रं तत्तत्फलविशेषसाधनतया बोधयति 'नतु जीवेश्वरयोरिव साक्षात्तद्भेदमपि । तथा च यदि श्रुतिमूलकत्वेन जीवेश्वरभेदानुमानस्य प्रामाण्यं तर्हि धर्माधर्मयोर्भेदस्य श्रुतावप्रतिपादनात् तद्भेदोऽप्रामाणिकः स्यात्, कर्मभेदप्रमाणन्याया अप्युपपत्तिरूपत्वादनुमानान्येव । तत्र यदि श्रुतिसिद्धविरुद्धधर्मकत्वमेव भेदानुमापकम्, तर्हि श्रुतिसिद्धत्वविशेषणवैयर्थ्यम्, इति व्याप्यत्वासिद्धिः ॥**

**समीक्षा** — यद्यपि न्यायामृताद्युक्तरीत्या विरुद्धधर्मवत्त्वानुमानेन ईश्वरजीवभेदसिद्धिरङ्गीक्रियते । तथाऽपि विरुद्धधर्मवत्त्वरूपहेतोः श्रुतिमन्त-

राऽसिद्धतया प्रकृतानुमानस्य श्रुत्युपजीवित्वं दुरपलपम् । श्रुतिसिद्धत्वस्य हेतुतावच्छेदकतया अनभिप्रेतत्वात् व्याप्यत्वासिद्ध्युद्भावनं छलमेव । इत्थञ्च श्रुतिनिरपेक्षानुमानसिद्धत्वाभावेन अपूर्वताया अक्षतत्वम् । यदि कश्चित् निर्गुणश्रुत्या ब्रह्मणि जीवविरुद्धधर्मशून्यत्वमवधार्य तेनैव हेतुना ईश्वरे जीवाभेदं संसाध्य तादृशे जीवाभेदे अनुमानसिद्धत्वात् मुख्यतात्पर्यं न स्यात् इत्यापादयेत्, तदा त्वया तादृशानुमानस्य श्रुति-सापेक्षत्वमाख्यायैव तत्र मुख्यतात्पर्यं समर्थनीयं तदस्माकमपि तुल्य-मेव । (**"यथोरेव समो दोष उत्तरं चोभयोः समम् । न तत्रैकोऽनुयोज्यः स्यात्"** इति प्रथितं न्यायं व्यस्मरः ? ।।)

(२२) अद्वैत० — **"वस्तुतस्तु - जीवादौ परोक्षेश्वरभेदस्य प्रत्यक्षाविरोधात्, तुल्यवित्तिवेद्यतया प्रत्यक्षमूलानुमानेनैवेश्वरे जीवभेदोऽपि श्रुतिनिरपेक्षमेव सिद्ध्यति, इति प्रमाणान्तरसिद्धानु-वादकत्वमेव जीवेश्वरभेदश्रुतीनाम्, इति न तत्र मुख्यं तात्पर्यं तासाम्, किन्तु तन्निषेधेन जीवेश्वराभेद एव तत्"।।**

**समीक्षा** — अत्र यद्यपि ईश्वरभेदः प्रत्यक्षसिद्धः इत्यभ्युपेमः, तथापि तस्य भेदप्रत्यक्षस्य श्रुतिसिद्धजीवेश्वरविरुद्धधर्मप्रतियोगिज्ञान-सापेक्षत्वात् श्रुतिमूलकत्वं नाप्राप्तम् ।।

(२३) **"भेदवाक्यानां निर्विशेषवाक्यशेषतया तत्रावान्तर-तात्पर्यम्"** इति शीर्षकमपि तदग्रेतनग्रन्थाननुगुणम् ।।

(२४) अद्वैत० — "जीवेश्वराभेदस्तु तद्भेदप्रयोजकतत्तदुपाधितत्प्रयुक्तभेदोभयबाधेन तदविवक्षया संविन्मात्रतैव, नतु जीवत्वेश्वरत्वविशिष्टयोरभेदः, इति न प्रत्यक्षविरोधः, तन्मूलानुमानविरोधः, आगमविरोधो वा जीवेश्वराभेदश्रुतीनाम्, इति भिन्नविषयत्वात् प्रत्यक्षागमयोर्न बाध्यबाधकभावः ॥"

**समीक्षा** — इति कथनं च परस्परव्याहतमेव । **'उपाधितत्प्रयुक्तभेदबाधेन'** इत्यनेन बाध्यबाधकभावमङ्गीकृत्य **"प्रत्यक्षागमयोः न बाध्यबाधकभावः"** इति तन्निषेधात् । नच **"तदविवक्षये"**ति कथनेन सा व्याहतिः परिहृतेति वक्तुं साम्प्रतम्, अविवक्षाया बीजाभावात् । प्रमाणान्तरसिद्धत्वे विद्यमाने जातुचित् अविवक्षा स्यात्, प्रकृते तु प्रमाणान्तरसिद्धत्वं नास्त्येवेति कथं तदविवक्षा? बाधस्य विवक्षितत्वे जीवेश्वरभेदप्रत्यक्षागमादिविरोधात् बिभेमीति चेत् तदा बाधासिद्ध्या जीवेश्वरभेदप्रत्यक्षादीनामनपोदितं प्रामाण्यमेव सिद्धम् ॥

(२५) अद्वैत० — "तत्र निषेध्यानामनन्तत्वात् भेदपराणां वाक्यानां बहुत्वं न तत्प्रामाण्यप्रयोजकं, अभेदवाक्याप्रामाण्यप्रयोजकं वा । नहि बहुलान्धकारस्यैकदीपप्रभाऽविरोधित्वम्, एकेन दीपेन बहुलान्धकाराबाधो वा; प्रत्यक्षविरोधात् इति न बहुत्वाल्पत्वप्रयुक्तो बाध्यबाधकभावः ॥"

**समीक्षा** – अत्र निषेध्यानामनन्तत्वात् भेदपराणां वाक्यानां बाहुल्यमिति यदि ब्रूषे, तर्हि एकस्मिन् निषेध्यविषये एव **"विश्वं सत्यम्, यच्चिकेत सत्यमित्तन्न मोघम्"**, एवमादीनि बहूनि वाक्यान्युपलभ्यन्ते; तेषां वैयर्थ्यमापद्येत । अस्मन्मते तु तेषां दार्ढ्याधायकतया सार्थक्यमक्षतम् ॥

(२६) किञ्च, बलाबलपरीक्षाप्रसङ्गे उपक्रमोपसंहारापेक्षया अभ्यासस्य बलीयस्त्वमभ्युपगम्यतेऽभियुक्तैः । तत् कस्य हेतोः? बहुबाधस्यान्याय्यत्वादिति चेत् तदा अङ्गीकृत एव अल्पत्व-बहुत्वकृतो बाध्यबाधकभावः ॥

(२७) अपरञ्च, अन्यथा - "त्यजेदेकं कुलस्यार्थे" इति लोकसिद्धन्यायोऽपि उपमर्दितः स्यात् ॥

(२८) अपिंच "बह्वृषिसम्मतम्" इति वचनं, लोके बहुमतस्यार्थसाधकतया दर्शनं च विरुद्ध्येयाताम् ॥

(२९) 'यस्त्वेकेन दीपेन' तदतिस्थवीयः – यावन्तं देशमभिव्याप्यान्धकारो वर्तते तावन्तं देशं प्रसृत्यैव दीपप्रभा तमन्धकारं नाशयितुं प्रभवतीत्यानुभाविकत्वात् ॥

(३०) अद्वैत० – "एतेन - बाधितप्रामाण्याभेदवाक्यबाध्यत्वं न प्रत्यक्षस्य; तत्पराणां वाक्यानां वेति" परास्तम् ;

अभेदवाक्यवाध्यत्वे नियामकाभावेन, निर्दोषत्वेन, निषेधवाक्यत्वेन च तत्प्रतियोगिसमर्पकभेदप्रत्यक्षादीनामेव बाध्यत्वेन चाभेदागमेनैव भेदप्रत्यक्षबाधात् तेनाभेदागमाप्रामाण्यवर्णनायोगात् ॥"

**समीक्षा –** अत्र अभेदवाक्यबाध्यत्वे नियामकाभावेनेति यदवोचि तदसदीयग्रन्थानवबोधविजृम्भितमेव । यतः **'तत्त्वमसि'** इत्यत्र **'सुपां सुलुक्'**इति वैयाकरणानुशासनानुसारेणैव **"तत् प्रति त्वमसि, तेनत्वमसि, तस्मै त्वमसि, तस्मात् त्वमसि, तस्य त्वमसि, तस्मिन् त्वमसि"** – इत्याद्यर्थानां प्रमाणान्तराण्यनुपमृद्य मुख्यवृत्त्यैव बोधसम्भवेन सावकाशताया जागरूकत्वेन भेदवाक्यानाञ्चार्थान्तरासम्भवेन निरवकाशताया अनपोद्यतया च अभेदवाक्यबाध्यत्वे नियामकमस्त्येव ॥

(३१) ये त्वया अभेदागमस्य बाधकत्वे नियामकतया निर्दोषत्वनिषेधवाक्यत्वे उपन्यस्ते ते उभे अपि नियामके भेदवाक्येऽपि तुल्ये । भेदवाक्यस्यापौरुषेयत्वेन निर्दोषत्वात् भेदस्य तादात्म्याभावरूपत्वेन तद्बोधकवाक्यस्य निषेधवाक्यताया अनपायात् । भेदप्रत्यक्षस्य संभावितदोषत्ववत् तत्त्वमस्यादिवाक्यस्यापि ग्रहीतृपुरुषनिष्ठतात्पर्यभ्रमादिसंभावितदोषत्वेन साम्यात् ॥

(३२) अद्वैत० – "यत्तु आगमानुभवोऽप्यप्रमाणं स्यात्, एवं तत्प्रामाण्यानुभवोऽपि - इत्यादि, तदिदं सर्वस्य तस्य व्याव-

हारिकप्रामाण्याङ्गीकारादकार्यकारि । व्यावहारिकत्वं हि प्रामाण्यस्य विषयस्याविद्याप्रयुक्तत्व-बाधयोग्यत्व-साधिष्ठानकारोप्यत्वादिप्रयुक्तम्, नतु ज्ञानमात्रस्य बाध्यत्वेन, इति घटादिज्ञानानामिव, कर्मोपासनाकाण्डानामिव च नाखण्डार्थवाक्याप्रामाण्यम्; तद्विषयस्यानारोपितत्वात्, निरधिष्ठानत्वाच्च । वृत्तिमात्रस्याज्ञानप्रयुक्तत्वेनाविद्यानिवृत्तिप्रयुक्तनिवृत्तित्वेऽपि न हानिः । यथा विकल्पाख्यवृत्तेरविद्यावृत्तित्वेऽपि नासतस्तद्विषयस्य आरोपितत्वम्, न वा मिथ्यात्वम् । अत एव साक्षिभास्यानां न वृत्तिभास्यत्वमिति मते शुक्तिरूप्यस्वाप्नादिमिथ्यात्वेऽपि साक्षिचैतन्यस्य तद्भासकस्याबाधात् वृत्तिस्वीकारपक्षेऽपि रजताकारवृत्त्यवच्छिन्नचैतन्याभिन्नशुक्त्याकारवृत्त्यवच्छिन्नचैतन्यस्यैव रजतप्रत्यक्षत्वाच्च रजतबाधेऽपि न तत्प्रत्यक्षस्य प्रातिभासिकत्वम् ॥''

**समीक्षा** – अत्र प्रामाण्यस्य व्यावहारिकत्वं लौकिकव्यवहारविषयत्वं वा, तावकीनपरिभाषामात्रसिद्धं ब्रह्मज्ञानबाध्यत्वं वा? नाद्यः, लोके त्वदुक्तेन विषयस्य बाधयोग्यत्वादिप्रयोजकेन प्रामाण्यस्य व्यवहाराभावात्, प्रत्युत बाधायोग्यत्वादिनैव व्यवहारात् । नापि द्वितीयः, त्वन्मते अखण्डार्थवाक्यप्रामाण्यस्य ब्रह्मज्ञानबाध्यत्वाभ्युपगमेन व्यावहारिकत्वेऽपि तत्प्रयोजकस्य विषये अखण्डार्थे बाधयोग्यत्वादेरभावात् ॥

(२२) किञ्च, अखण्डार्थवाक्ये विषयस्य निरधिष्ठानत्वेन

अनारोपितत्वेन च अप्रामाण्याभावं यदि ब्रूषे तर्हि "शशविषाण-मस्ती"ति वाक्यस्याप्यप्रामाण्याभावं कुतो न ब्रूषः ? अनारोपि-तत्वनिरधिष्ठानत्वयोरुभयत्राविशेषात् ॥

(३४) अपरञ्च 'अत एवेत्यादिना - विषयस्य मिथ्यात्वेऽपि तज्ज्ञानस्य न मिथ्यात्वम्' इति प्रतिज्ञानं तत्समर्थनाय दृष्टान्तं पन्या-सश्च अनुक्तोपालम्भ एवेति क्षोदं न क्षमते ॥

(३५) अद्वैत० — **"नहि शुक्तिरजतादिविषयः सन्, बाधितत्वात्; नाप्यसन्, प्रत्यक्षत्वेन प्रतीतेः । प्रत्यक्षत्वं हि भातीतिव्यवहारयोग्यत्वमभानापादकाज्ञानासत्त्वापादकाज्ञान-द्वयनिवृत्त्युपहितचैतन्यतादात्म्यमनिर्वचनीयत्वं विना नोप-पद्यते ।।"**

**समीक्षा** — अत्राज्ञाननिवृत्त्युपहितचैतन्यतादात्म्यं अनिर्वच-नीयत्वं विना न सिध्यति — इत्युक्तिरर्थापत्तिस्वरूपापरिज्ञानमूलैव । प्रमि-तस्य अर्थस्य किञ्चिदर्थसत्त्वं विनाऽनुपपत्तिप्रतिसन्धानं हि अर्थापत्तिः । प्रकृते शुक्तिरजतादौ त्वदुक्तचैतन्यतादात्म्यस्याप्रमितत्वात् ॥

(३६) किञ्च अत्र 'प्रत्यक्षत्वेन प्रतीतेः' इत्यत्र 'प्रत्यक्षत्वेन' इत्यस्य हेतुतावच्छेदककुक्षिप्रवेशे व्याप्यत्वासिद्धिः । नच प्रतीति-मात्रस्य शाब्दप्रतीतिविषये शशविषाणादौ अतिप्रसक्तत्वेन 'प्रत्यक्षत्वेन' इत्यस्य सार्थक्यम् इति वाच्यम् । स्वप्ने प्रत्यक्षतया प्रतीयमाने

शशविषाणादौ व्यभिचारतादवस्थ्यात् । नच तत् शशविषाण-मनिर्वचनीयमेवेति वक्तुं साम्प्रतम् । शाब्दप्रतीतावपि भासमानं शशविषाणमनिर्वचनीयमेवेति कुतो नाभ्युपेयते, कुतस्तरां वा अयं बकबन्धप्रयासः ?

(३७) यश्च **"असत्तु यद्यपि प्रतीयते तथापि न भाति"** इत्यादिनाप्रतीतिभानयोर्वैलक्षण्योपपादनाय स्वगोष्ठीनिष्ठप्रलापोपन्यासः, सच सम्प्रतिपन्नप्रमाणाभावादेवोपेक्ष्यः ॥

(३८) अद्वैत — **"यद्यप्यनिर्वचनीयेऽनिर्वचनीयत्वमप्य-निर्वचनीयम्; तथाऽपि मिथ्यात्वतन्मिथ्यात्वयोरिव तत्र प्रयोजकैक्यात् न प्रथमानिर्वचनीयत्वव्याघातः ॥"**

**समीक्षा — "अनवस्थादयो दोषाः सत्तां निघ्नन्ति वस्तुनः । अद्वैतिनां ते सुहृदः"** इति विश्रुततया अनवस्थाव्याघा-तादिस्वसुहृद्भूतानपि दोषान् साम्प्रतमेकत्र वारितुकामेन प्रयोजकैक्यात् भावाभावयोरुभयोरपि निषेधे न व्याघातः इति यदुक्तं तत् 'मम जिह्वा नास्ति' — इत्यादावपि यत्किञ्चित्प्रयोजकैक्यमादाय व्याघातवारणावसर-प्रसङ्गकम् ॥

(३९) **अद्वैत०—बाध्यत्वं हि विषयस्य तदधिष्ठानसाक्षा-त्कारनिवर्त्यत्वम्, बाधकत्वं तु अधिष्ठानसाक्षात्कारविषयत्वेन अन्यथैकस्यां रज्जौ सर्प-भूरन्ध्र-जलधारादिभ्रमाणां बहूनामेकरज्जु-**

**साक्षात्कारबाधकत्वं तद्धहुत्वेनापद्येत ; एकाधिष्ठानकत्वस्य भेद-बहुत्वस्थलेऽप्यविशेषात् ॥''**

**समीक्षा** — तत्र बाध्यत्वं हि विषयस्य तदधिष्ठानसाक्षात्कार-निवर्त्यत्वम् इति नोपपन्नम् । इदं रजतम् इत्यत्र 'इदम्'- रूपाधिष्ठान-साक्षात्कारकाल एव भ्रमोत्पत्तेर्दर्शनात् । नचाधिष्ठानासाधारणधर्मसाक्षा-त्कारनिवर्त्यत्वं तत्, अद्वैतमते ब्रह्मणो निर्धर्मकत्वेन ब्रह्मण्यारोपितजगति-अव्याप्तेः । नच अधिष्ठानेतराविषयकसाक्षात्कारनिवर्त्यत्वमिति वक्तुं युक्तम् । 'इयं शुक्तिः' इति बाधकज्ञानस्य अधिष्ठानेतरशुक्तित्वादि-विषयकत्वेनानुपपद्यमानत्वात् । अधिष्ठानतद्धर्मेतराविषयकत्वं साक्षात्कारे विवक्षितम् - इति चेत् निर्विकल्पकाङ्गीकर्तृमते शुक्तिनिर्विकल्पकज्ञान-स्यापि अधिष्ठानतद्धर्मेतराविषयकत्वेन बाधकत्वं प्रसज्जेत ॥

(४०) यच्च तावत् एकस्यां रज्जौसर्पादिभ्रमाणां बहुत्वेन बाधकत्वमापादितम्, तद् विभिन्नप्रकारकत्वादत्र, एकप्रकारकबहुविरु-द्धत्वं बाध्यत्वमित्येवास्मद्विवक्षितत्वादनुपपन्नम् ॥

(४१) **'एतेन एकाधिष्ठानकानेकविषयकभ्रमोऽपि व्या-ख्यातः'** इत्यनेन या कृतकृत्यता प्रदर्शिता सा स्वाप्नी, यतो हि सादृश्यमन्तरा एकाधिष्ठाने विविधविषयकभ्रमः नानुभवपथमधिरूढः प्रदर्शितजलधारादीनां वक्रत्वादिसादृश्यस्य सत्त्वात् तत्र नानुपपत्तिः । एकब्रह्माधिष्ठानकघटपटादिभ्रमे सादृश्याभावात् तादृशभ्रमानुपपत्तिर्वज्र-लेपायिता ॥

(४२) यच्च **'बाध्यत्वप्रयोजकं बाधावरोयदोषजन्यत्व'** मित्युक्तम्, तत्र प्रयोजकशब्दस्य ज्ञापकार्थकत्वे बाध्यत्वे निश्चिते दोष-जन्यत्वनिश्चयः, दोषजन्यत्वे निश्चिते बाध्यत्वनिश्चयः इत्यन्योन्याश्रयः। प्रयोजकशब्दस्य कारणार्थकत्वे सिद्धसाधनम्। दोषजन्यतायां बाध्यता-कारणत्वस्यास्माभिरङ्गीकृतत्वात्। बाध्यत्वे बहुप्रमाणविरोधित्वं निश्चा-यकं न वा इति विवादावसरे बाध्यत्वे दोषजन्यत्वस्य कारणत्वकथन-मप्रसक्तम्॥

(४३) अद्वैत० — **नच दोषजन्यत्वनिश्चयो बहुप्रमाण-विरोधाधीनः यावद्बाधं मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वेन शुक्तिरजतादिज्ञानानामपि प्रमाणत्वाविशेषेण यावद्बाधं प्रमाणा-प्रमाणविभागानुपपत्तेः॥**

**समीक्षा** — यावद्बाधं प्रमाणाप्रमाणविभागाभावेऽपि द्वयोः प्रामाण्याभिमानकाल एव बहुत्वेन प्रबलानां प्रमाणानां विरोधमाश्रित्य अन्यतरस्य दोषजन्यत्वनिश्चयो युज्यत एव॥

(४४) अद्वैत० — **अनुवादो हि प्रत्यक्षादिप्राप्तस्यापि, यथा वह्निहिमभेषजत्वे, वेदवाक्यप्राप्तस्यापि, यथा जर्तिलयवागू-स्थले' इति सत्यकामादिबहुतरभेदपरवेदवाक्यगम्यत्वमपि तेषां बाध्यत्वे न विरोधि॥"**

**समीक्षा** — वेदवाक्यप्राप्तस्य वेदवाक्यान्तरेण निषेधः प्रक्षालना-द्धिन्यायेन शङ्कराचार्यप्रभृतिभिर्भाष्यकारैः प्रत्याख्यातत्वेनानास्थेयः।

[1]नचायं न्यायो निष्प्रयोजनस्थल एव प्रवर्तते, न पुनः सगुणोपासनार्थं प्रवृत्त जीवेश्वरभेदानुवादे, इति युक्तम्, तथा सति शङ्कराचार्याः 'स वा एष आत्मानेति नेति' इति वाक्यपर्यालोचनावसरे नेमं न्यायमुपायोक्ष्यन् । यतो हि निर्गुणब्रह्मणः वेदे उपासनार्थमनुवादेन पुनस्तन्निषेधेऽपि एतन्न्यायस्याविरोधो युज्येतैव, सत्यप्येवं तन्न्यायविरोधोद्भावनेन ब्रह्मणोऽनिषेध्यत्वकथनं तेषामसङ्गतं स्यात् । तस्मात् भाष्यकारासम्मताः जर्तिलयवागूस्थलीयपूर्वमिमांसान्याया अनवधेया अन्यथा वा व्याख्येयाः ॥

(४५) अद्वैत० — एतेन- "**प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्**' इति ब्रह्मतर्कवचनमपि व्याख्यातम् ; **प्राबल्य-दौर्बल्यचर्चा हि सति विरोधे, न त्वविरोधे, इति प्रत्यक्षेणागमविरोधे प्रत्यक्षाप्रामाण्यव्यवस्थापकमेव तद्वचनम् इति नास्य धर्मादिमात्रविषयत्वम् ; अन्यथा तद्वचनवैयर्थ्यात् । नहि धर्मः प्रत्यक्षस्य विषयः, इति न तत्र प्राबल्यदौर्बल्यकथाऽवसरति ॥**"

**समीक्षा** — अत्र नास्य धर्मादिमात्रविषयत्वमिति कथनं न युक्तम्, अर्जुनयशोदादीनां विश्वरूपसाक्षात्कारे भयादिदर्शनात्, किञ्चिदंशे भ्रमः सम्भाव्यते । तत्र भ्रमत्वं प्रबलागमविरोधादेवोन्नेयम् । तथा चातीन्द्रियस्थलेऽपि त्रयाणां प्रसक्तिर्नासम्भाविता ॥

---

[1] इयं शङ्का ११९ तमे पृष्टे व्यक्ता अत्र प्रसङ्गेन निराकृता ॥

(४६) किञ्च त्वदुक्तरीत्यास्य वचनस्य प्रत्यक्षेणागमविरोधे प्रत्यक्षाप्रामाण्यव्यवस्थापकत्वे 'यजमानः प्रस्तरः' इत्यागमविरुद्धस्य-प्रत्यक्षस्यैवाप्रामाण्यं स्यात् । नच अल्पपरिमाणसूर्यादिप्रत्यक्षस्य तद्विरुद्धागमेन बाधो न स्यात् इति वाच्यम्, तत्र दूरस्थत्वादिदोषयुक्तत्वनिश्चयेन प्रत्यक्षस्य स्वत एवापटुत्वावधारणात् । तत्रागमस्याकिञ्चित्करत्वात् । यतो हि अस्मदागमानभ्युपगन्तारोऽपि आधुनिका वैज्ञानिकाः सूर्यस्य प्रादेशपरिमाणत्वं नाभ्युपयन्त्येव ॥

**(४७) अद्वैत० – "असतः सद् जायते' त्यादिश्रुत्यर्थस्तु पौर्वापर्यपर्यालोचनेनानभिव्यक्तनामरूपावस्थाविद्योपहित-ब्रह्मकारणतापरत्वात्, युक्तिविरुद्धत्वाच्च नासत्कारणतोपपादकः, इति नागमप्रामाण्यमात्रेणासत्कारणतापत्तिः ॥"**

**समीक्षा** – अत्र त्वदुक्तदिशा युक्तिविरुद्धत्वपूर्वापरपर्यालोचनेन असतः सदजायते'ति वाक्यस्य अर्थान्तरपरत्वे अभेदागमस्यापि विरुद्धधर्मरूपयुक्तिविरुद्धत्वेन भेदाविरोध्यर्थान्तरकथनस्यैव प्राशस्त्यं त्वयैवाभ्युपगतमिति जरीहृष्यामः । अभेदागमस्य पूर्वापरपर्यालोचनेऽपि अभेदपरत्वासिद्ध्याऽर्थान्तरकथनमत्रापि समानमेव । तथाहि 'सदेव सोम्येदमग्र आसीत्' इति सत्तासम्बन्धः, 'अग्रे' कालसम्बन्धः 'एकमि'ति एकत्वाख्यगुणः 'ब्रह्मे'त्यनेन पूर्णत्वम्, 'ऐक्षते'ति ईक्षणकर्तृत्वम्' नाम-रूपे व्याकरोत्' इति प्रपञ्चकर्तृत्वम्, 'अनुप्रविश्य' इति प्रवेशकर्तृत्वं च श्रूयमाणं संविन्मात्रं व्यवच्छिनत्त्येव ॥

(४८) अद्वैत०—प्रवृत्तिप्रयोजकत्वलक्षणम्, अनुष्ठापकत्वलक्षणं वा प्रामाण्यं तु स्मृतीनामप्यविशिष्टम् । तदपि प्रबलप्रमाणविरोधे बाधितमिति ॥"

**समीक्षा** — तदेतदसमञ्जसम् । तथाहि प्रवृत्तिप्रयोजकत्वानुष्ठापकत्वयोर्भ्रमे सौगतादिमतेऽपि सत्त्वेनातिप्रसक्तस्य प्रामाण्यस्वरूपत्वायोगात् । वस्तुतस्तु याथार्थ्यमेव प्रामाण्यम् ॥

(४९) किञ्च तदपीत्यादिना यदुक्तं तत् ४ तमे पृष्ठे 'दोषजन्यत्वनिश्चयो बहुप्रमाणविरोधाधीनः' इत्यस्य खण्डनावसरे समुद्भावितस्य "**यावद्बाधं मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वेन शुक्तिरजतादिज्ञानानामपि प्रमाणत्वाविशेषेण यावद्बाधं प्रमाणाप्रमाणविभागानुपपत्तेः**" इति दूषणस्यात्रापि प्रसक्तेः स्ववचनविरुद्धम् ॥

(५०) अद्वैत० — "**एतेन भेदप्रत्यक्षादीनां तर्कबाध्यत्वमपि व्याख्यातम् ॥**"

**समीक्षा** — अत्र भेदागमानामनुवादत्वप्रसञ्जनाय स्वयं भेदस्यानुमानसिद्धत्वमङ्गीकृत्य इह पुनः निर्विशङ्कं तर्कबाध्यत्वकथनं स्वव्याहतमेव ॥

(५१) अन्यच्चात्रेदमनुप्रोक्तव्यम् – भेदप्रत्यक्षे केवलतर्कबाध्यत्वं वा? उत प्रत्यक्षमूलतर्कबाध्यत्वं वा? आहोस्विदागममूलतर्कबाध्यत्वं वा? नाद्यः, 'तर्काप्रतिष्ठानात्' इति सूत्रेण केवलतर्कस्य प्रत्याख्यानात् ।

नापि द्वितीयः – प्रत्यक्षमात्रस्य यत्किञ्चिद्भेदविषयकत्वनियमेन भेदनिरासकतर्कस्य प्रत्यक्षमूलकत्वासम्भवात् । नच तृतीयः - अभेदागमस्य संविन्मात्रबोधकतया त्वयाऽभ्युपगमात् । प्रमाणेषु प्रत्यक्षस्य दृष्टार्थे ज्यैष्ठ्यात् आगममूलकतर्केणापि भेदप्रत्यक्षस्य बाध्यत्वासम्भवाच्च ॥

**(५२) "अतः उपक्रमोपसंहाराद्यवगतमुख्यतात्पर्यकाभेदवाक्यसिद्धः प्रत्यक्षादिप्रमाणान्तराविषयोपाधिविरहप्रयुक्तभेदविरहरूपोऽभेद एव सर्वश्रुतिस्मृतिपुराणेतिहासादिसिद्धः । तत्पराणामेवागमानां तत्रैव मुख्यं तात्पर्यम् ॥"**

"**समीक्षा –** अत्र भेदविरहरूपोऽभेदः संविन्मात्रादतिरिच्यते ? उत तत्स्वरूपमेव वा ? अतिरिक्तत्वे संविन्मात्रे भेदविरहे च वाक्यभेदप्रसक्त्या उभयत्र मुख्यतात्पर्यायोगात् । तत्स्वरूपत्वे भेदविरहस्य त्वदुक्तोपाधिविरहप्रयुक्तत्वस्य बाधात् । निर्विशेषस्य त्रैकालिकस्य यत्किञ्चित्प्रयुक्तत्वासम्भवात् ॥

(५३) किञ्च अभेदागमस्य **भेदविरहरूपेऽर्थे** लक्षणा किलाङ्गीक्रियते ? तत्र मुख्यार्थं परित्यज्य जघन्यवृत्त्यङ्गीकारे उपक्रमाद्यानुगुण्यमेव बीजमुक्तम्, उपक्रमोपसंहारादीनामपि त्वन्मते लाक्षणिकत्वम्, तत्र लक्षणायां किं बीजम् ? इति प्रश्ने तत्र उपक्रमाद्यन्तरासंभवात् अभेदागमबलेनैवेति वाच्यम् - तथा चान्योन्याश्रयो वज्रलेपायितः । नास्मन्मते कुत्रापि जघन्यवृत्तेराश्रयणावश्यकतेति पूर्वमेवोक्तम् ॥

(५४) अद्वैत० –

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

इत्यदिगीतावचनात् – क्षराक्षरसर्वोपाधिविनिर्मुक्तसंविन्मात्रतैव पुरुषोत्तमः, नतु प्रकृत्यादिशबलितं विष्ण्वादिस्वरूपम्, अन्यथा "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः" – इति स्वस्य पुरुषोत्तमत्वे तत्र हेतुनिरूपणमसङ्गतं स्यात् । कार्यकारणोपाधिशबलितं प्रत्यक्षानुमानादिना श्रुत्यनुगृहीतेन लोकसिद्धम् । तदेव लोकसिद्धं वेदेष्युपाधिविरहिततया प्रतिपाद्यत इति हि शास्त्रार्थः ॥"

**समीक्षा**–सर्वमिदमत्यन्तासङ्गतम्, तथाहि 'उत्तमः पुरुषस्त्वन्यः' इत्यत्रान्यशब्देन सुस्पष्टतयाभेदस्य विधानात् । भेदस्य च त्वन्मते औपाधिकत्वेन तादृशभेदवतः सर्वोपाधिविनिर्मुक्तत्वासम्भवात् ॥

(५५) किञ्च उत्तमत्वं हि नियमेन गुणसापेक्षम्, "महत्त्वं च गुणेनैव नाकारेण धनेन वा" इति न्यायात् प्रकृते निर्गुणस्य संविन्मात्रस्यात्रोक्तोत्तमत्वासम्भवात् ॥

(५६) अन्यच्च **"यो लोकत्रयमाविश्य"** इत्यनेन लोकत्रया-विष्टत्वरूपसविशेषत्वमेव दृढीक्रियते ॥

(५७) यच्च विष्णोः प्रकृत्यादिशबलितत्वमवोचि, तत् प्रकृत्या द्यन्तर्यामित्वं चेत् 'ओम्' इति ब्रूमः । लोकत्रयमाविश्येत्यनेनास्यैव संवादात् । एतदतिरिक्तं राहुग्रासादिसदृशं यत्किञ्चित् कल्प्यते चेत् तद् अप्रामाणिकमेव 'मयाध्यक्षेण प्रकृतिः' इत्यत्रापि प्रकृतेः स्वामित्व-स्यैव पुरुषोत्तमस्य विष्णोः प्रतिपादनात् ॥

(५८) किञ्च श्रुतौ **"अदित्यवर्णं तमसः परस्तात्"** इत्यनेन सविशेषस्य विष्णोः तमःशब्दितप्रकृत्यतीतत्वमेवोद्घोष्यते, नतु शब-लितत्वम्, । यदि विष्णुपदार्थैकदेशशुद्धरूपाभिप्रायेण प्रकृत्यतीतत्वं विवक्ष्येत तर्हि तस्य चैत्रादिसर्वजीवसाधारण्यात् विष्णोरेव विशेषो-क्त्ययोगात् । न चेष्टापत्तिः, अस्य वाक्यस्य आदित्यवर्णत्वादिविशेषोक्ति-समभिव्याहारात् ॥

(५९) यच्च 'यस्मादित्यादिना स्वस्य पुरुषोत्तमत्वे तत्र हेतु-निरूपणमसङ्गतं स्यादि'ति आपादितं तदत्यन्तासङ्गतम् । त्वन्मतरीत्या कृष्णस्य अर्जुनवत् प्रकृत्यादिशबलितत्वेन स्वस्यैव विशिष्य क्षराक्षरा-तीतत्वकथनायोगात् । शुद्धरूपाभिप्रायेण कथने तु तत् अर्जुनस्यापि समानमेव ॥

(६०) किञ्च 'क्षरादतीतत्वं' उपाधिविनिर्मुक्तत्वं चेत् अक्षरा-

दुत्तमत्वं तद्विरुद्धमापद्येत ; उक्तरीत्या उत्तमत्वस्य गुणित्वाविनाभूतत्वात् सगुणस्य च परमते औपाधिकत्वात् तस्यापि अक्षररूपोपाधिनिर्मुक्तत्वमेवार्थः इति चेत् कुतस्त्योऽयमर्थः? नहि लोके निगडान्मुक्तः निगडादुत्तम इत्युच्यते, तथा वस्त्राद्यावृतः पुरुषः वस्त्रादिभ्य उत्तम इत्यप्युच्यते लोके; एवमेव प्रकृत्याद्यन्तःप्रविष्टोऽपि प्रकृत्याद्युत्तमो भवितुमर्हत्येव ॥

(६१) अन्यच्च 'अतोऽस्मी'त्यत्र 'अत'- इत्युक्तक्षराक्षरातीतत्वरूपैकहेतुनैव पुरुषोत्तमत्वस्य लोकवेदोभयप्रथितत्वकथनात्, त्वया च कार्यकारणोपाधिशबलितं लोकसिद्धम्, उपाधिरहितश्च तदेव वेदसिद्धमित्याख्यानं उदक्षरप्रलाप एवाऽऽविष्कारि ॥

**(६२) अद्वैत० – "क्षेत्रज्ञं चापि मां विद्धि" इति स्थूलसूक्ष्म-कारणशरीर-तत्समष्ट्युपहितपरमात्मा ह्यत्र प्रस्तुत उपसंह्रियते ॥"**

**समीक्षा**—पूर्वोक्तरीत्या अनन्तगुणपरिपूर्णस्य समस्तजीवजडेभ्यो विलक्षणस्य श्रीविष्णोरेव महिमा सोपपत्ति वर्णित इति सोपपत्ति समर्थनेन भवदीयार्थान्तरपरिकल्पनमप्रकृतमेव । 'क्षेत्रज्ञं चापि मां विद्धि' इत्यनेन "मां = कृष्णं, क्षेत्रज्ञं = सर्वज्ञं, विद्धि = जानीहि" – इत्येव गीतोपदेशकश्रीकृष्णस्य हृद्गतोऽर्थः पूर्वापरसन्दर्भपर्यालोचनेन समधिगन्तव्यः ॥

(६३) किञ्च सर्वोपाधिविनिर्मुक्तसंविन्मात्रतैव पुरुषोत्तम इत्यभिधाय साम्प्रतम् 'उपहितः परमात्मा उपसंह्रियते' इति व्याहरणं व्याहतमेव ॥

अधिकन्तु पुण्यश्लोकाः स्वनामधन्याः प्रातःस्मरणीयाः लोकोत्तरादूप्यवैदुष्यधैर्यौदार्यादिसम्पत्समेधितकुन्देन्दुधवलयशोमण्डला विद्याविद्वत्कल्तरवः अस्मद्विद्यागुरवः १०८ **श्रीमत्सत्यध्यानतीर्थश्रीचरणाः**, **'अद्वैततत्त्वसुधा'**कारानेतान् कुम्भघोणे वाक्यार्थविचारपरिषदि मध्ये विबुधसन्दोहं लेखबद्धतया दुरपह्नवे **'क्षेत्रज्ञ'**वाक्यविचारे साधु पर्यबूबुधन् इति नात्र पुनस्तत्प्रपञ्च्यते ॥

(६४) अद्वैत० – **"यद्यप्यद्वैतवादे द्वैतश्रुतिर्मिथ्यार्थवादिनी; तथाऽपि मिथ्यार्थं मिथ्यात्वेन बोधयन्त्याः श्रुतेर्नाप्रामाण्यम्; बाधितार्थविषयत्वेह्यप्रामाण्यम् । नच मिथ्यार्थस्य मिथ्यात्वं बाधितम्; प्रपञ्चतन्मिथ्यात्वोभयबाध्यत्वेऽपि प्रपञ्चसत्यत्वाभावस्योपपादयिष्यमाणत्वात् ॥"**

**समीक्षा** – अत्र भवता बाधितार्थविषयकत्वमप्रामाण्यमिति तथा श्रुतिप्रतिपाद्यस्य प्रपञ्चमिथ्यात्वस्य बाध्यत्वं च स्वीकुर्वता श्रुतेः बाधितार्थविषयत्वरूपमप्रामाण्यं सुस्फुटमुररीकृतम् । प्रपञ्चसत्यत्वं वारयिष्यन्नपि अप्रामाण्यं श्रुतेरापतितं वारयितुं नेष्टे ॥

(६५) अद्वैत० – **"वस्तुतस्तु– मिथ्यार्थस्य सत्यत्वेन**

बोधने हि तद्बाधितार्थत्वादप्रमा । विद्वन्मात्राधिगम्या हि ब्रह्मसत्यता, जगन्मिथ्यात्वं च, इति तदीयानुभवमादायैव तत्त्व-व्यवस्थाऽऽत्मतत्त्वविषये, तदधिकारस्तु ब्रह्मविद्यानिष्णातानाम्। नतु कर्ममात्रनिष्ठानाम्, उपासनामात्रनिष्ठानां वेति कर्मविचारैक-दृष्टिः प्रभाकरगुरुः स्वीयबृहत्यां लिखति– "यस्तु ब्रह्मविदामेष निश्चयः यदुपलभ्यते, न तत् तथ्यम्, यन्नोपलभ्यते तत् तथ्यम्– इति नमस्तेभ्यः, विदुषां नोत्तरं वाच्यम्" – इति । सर्वथा तु श्रुतिः प्रपञ्चविषय एव मिथ्यात्ववादिनी, ब्रह्मणि तु सत्यत्व-वादिन्येव; इति जीवत्वेश्वरत्वोपलक्षितसंविन्मात्राद्वितीयस्य ब्रह्म-तत्त्वस्यानारोपितस्य, निरधिष्ठानस्य, अधिष्ठानतत्त्वसाक्षात्कारा-बाध्यस्य च सत्यत्वाद् न श्रुतेर्ब्रह्मांशेऽपि मिथ्यार्थानुवादित्वम्, नवा वेदवादिनोऽवेदवादित्वम् शून्यवादसाम्यं वा ॥"

समीक्षा – अस्मिन् प्रघट्टके स्वोक्तार्थसमर्थनाय '**यदुपलभ्यते न तत् तथ्यम्, यन्नोपलभ्यते तत् तथ्यम्–**' इति प्राभाकरवाक्य-मुद्धृत्य 'यद् ज्ञायते तत् मिथ्या' इत्यङ्गीकृत्यापि '**विद्वन्मात्राधिगम्या हि ब्रह्मसत्यता, जगन्मिथ्यात्वं च**' इत्यनेन ब्रह्मजगन्मिथ्यात्वयोः ज्ञेयत्वविशिष्टसत्यत्वाभ्युपगमो व्याहतिभुजङ्गीदष्टः ॥

(६६) किञ्च प्रपञ्चमिथ्यात्वबोधकं वाक्यं, मिथ्यात्वं त्रिकालाबा-धितम् इति प्रतिजानीते न वा ?

आद्ये त्वन्मतरीत्या बाधितार्थबोधकतया अप्रामाण्यं दुर्निवारम्,

मिथ्यात्वस्यापि त्वन्मते मिथ्यात्वात्, द्वितीये अनुवादवाक्यतुल्यतापत्त्या स्वार्थासाधकत्वमेवेति उभयतः पाशारज्जुः ॥

**(६७) अद्वैत० — "अद्वैतं हि जीवत्वेश्वरत्वोपलक्षितौपाधिकभेदशून्याद्वितीयसंविन्मात्रतैव, नतु जीवत्वेश्वरत्वविशिष्टकिञ्चिज्ज्ञसर्वज्ञाभेदः इति नाहं सर्वज्ञ इत्यनुभवः, अहं सर्वज्ञइत्यनुभवाभावो वाऽकिञ्चित्करः, अहं सर्वज्ञ इत्यनुभवस्य अद्वैताननुभवत्वात्, अहं सर्वज्ञ इत्यनुभवस्यापि मिथ्यार्थविषयत्वाच्च । भिन्नयोरभेदानुभवो भ्रम एव ॥"**

**समीक्षा—** भेदशून्याद्वितीयसंविन्मात्रमद्वैतं श्रुतेः मुख्यवृत्तिपरित्यागेन जघन्यवृत्त्याश्रयणेन महता क्लेशेन निष्कृष्यते । तदपेक्षया विरुद्धधर्मविशिष्टयोरेवाभेदस्य अद्वैतरूपतयाऽङ्गीकरणं किल वरीयः? धर्माणां मिथ्यात्वेन तद्विशिष्टयोरभेदो न सम्भवतीति चेत् धर्माणां मिथ्यात्वनिश्चायकं किं तत्? शास्त्रैरद्वितीयसंविन्मात्रबोधनमिति चेत् शास्त्राणां लक्षणयाऽद्वितीयसंविन्मात्रबोधकत्वे निश्चिते विरुद्धधर्माणां मिथ्यात्वनिश्चयः । सति च तस्मिन् विशिष्टार्थत्यागः । त्यागे च लक्षणया संविन्मात्रबोधकत्वम् - इति अन्योन्याश्रयो गलं पीडयत्येव ॥

**(६८) अद्वैत०—"अयं ह्यनुभवः—अहं सर्वज्ञ इत्यभिलप्यमानोऽपि उपाधीनामत्रोपलक्षणतयैव विवक्षणात् नामान्तरेण संविन्मात्रानुभव एव ॥"**

एवम् उपाधीनामुपलक्षणताविवक्षणस्य मुक्तशृङ्खलत्वे 'अयं घटः' इत्यनुभवोऽपि संविन्मात्रोल्लेखी स्यात् । तथा च सर्वेषामनुभवानां संविन्मात्रविषयकत्वेन तद्बोधकाद्वैतागमस्य प्रमाणान्तरसिद्धानुवादकत्वमेव स्यात् ॥

(६९) अद्वैत० – **"न ह्यभेदाभावो भेदः, भेदाभावो वाऽभेदः, येनोभयोरपि विरोधः स्यात् ॥"**

**समीक्षा –** पूर्वपृष्ठे एव **भेदविरहरूपोऽभेद एव सर्वश्रुतिस्मृतिपुराणेतिहासादिसिद्धः** - इत्यत्र अभेदस्य भेदाभावरूपविरहत्वम् अङ्गीकृत्य अत्र पुनस्तन्निषेधः जनन्या मातृत्वनिषेधमनुहरति ॥

(७०) अद्वैत० – **"भेदस्य धर्मिस्वरूपत्वेऽपि तु स्वरूपमात्रयोर्भेदाभेदयोः कथं विरोधः ? घटपटादिस्वरूपाणां सर्वेषां प्रतियोगिनिरपेक्षभेदस्वरूपत्व ऐक्यात् कथं घटपटादिभेदानुभवः, तत्तदर्थक्रियामात्रकारित्वं वा तस्य ? इदं रजतमित्यत्र स्वरूपमात्रस्य भेदत्वे इदंज्ञानस्यैव नेदं रजतमिति भेदज्ञानरूपत्वादिदंरजतयोः कथं सामानाधिकरण्यम् ? बाधज्ञानरूपस्य तस्य कथं वा भ्रमत्वं ? सदसत्ख्यात्यादिपक्षेषु कुत्रापि कथं वा रजतार्थिनामिदङ्काराभिमुखप्रवृत्तेर्निर्वाहः ? कथं वा स्थाणुर्वा पुरुषो वेति संशयोऽपि ॥"**

**समीक्षा** – भेदाभेदयोर्द्वयपि धर्मिस्वरूपत्वमेव । तथाऽपि

तद्घटे तद्घटाभेद एव धर्मिस्वरूपत्वेन विवक्षितः, तादृशाभेदस्य पटादिभेदविरोधित्वप्रसक्तिरेव नोपस्थिता । घटे पटादिभेदं प्रति घटे पटाद्यभेद एव विरोधी । सतु अभेदो घटस्वरूपतया नाङ्गीक्रियते, अतस्तत्र पटभेदसत्त्वे न किमपि बाधकम् ॥

(७१) किञ्च भेदस्य अस्मन्मते प्रतियोगिनिरपेक्षत्वानङ्गीकारात् भेदप्रतिनिधिविशेषबलेन सप्रतियोगिकत्वस्यैवोपपादितत्वेन 'घटपटादिस्वरूपाणां सर्वेषां प्रतियोगिनिरपेक्षत्वे' इत्यापादकासिद्धिः ॥

(७२) किञ्च त्वन्मते ७२तमे पृष्ठे प्रपञ्चाभावस्वरूपत्वस्य ब्रह्मण्यङ्गीकारात् प्रपञ्चारोपे अधिष्ठानभूतब्रह्मज्ञानं प्रपञ्चाभावविषयकमेवेति हेतोः "इदं रजतमिति ज्ञानस्य नेदं रजतमिति भेदज्ञानस्वरूपत्वात् बाधज्ञानस्वरूपस्य तस्य कथं भ्रमत्वमि"त्याक्षेपो भवत्स्कन्धमेवाधिरूढः । प्रपञ्चाभावत्वोपलक्षिताभावस्वरूपत्वमेव ब्रह्मणः, नत्वभावत्वविशिष्टस्वरूपत्वम्, अतो नायमाक्षेपोऽस्मदुपरि इति चेत्, अस्माभिरपि इतरप्रतियोगिकत्वविशिष्टभेदत्वोपलक्षितभेदस्वरूपत्वमेव धर्मिणः स्वीक्रियते इति समानः परिहारः । परमियान् विशेषः - यदस्मदीयाङ्गीकारः सर्वोऽपि समूल इत्येव । विशेषस्त्वाकरतोऽवसेयः ॥

(७३) अद्वैत० - "एतेन - 'स आत्मा तत्त्वमसि श्वेतकेतो' इत्यत्राकारप्रश्लेषेणाऽतत्त्वमसीति पदच्छेदोऽपि परास्तः, तथा व्याख्यानेपि स्वरूपातिरिक्तस्य भेदस्य तत्राभावात् को वा

फलभेदः ? स्वरूपद्वयस्य भिन्नस्य प्रतीतौ कथं सामानाधिकरण्यम् ? किमर्थं वाऽकारप्रश्लेषः ? "

**समीक्षा** – भेदस्य धर्मिस्वरूपत्वेऽपि इतरप्रतियोगिकत्वविशिष्टभेदत्वेन रूपेण भेदभानार्थं सम्भवन्नकारप्रश्लेपः सार्थक एव । त्वन्मत एव ऐक्यस्य ब्रह्मरूपत्वेन एकपदेनैव तद्बोधनसंभवात् अधिकपदानां वैयर्थ्यम् अपरिहार्यम् ॥

(७४) अद्वैत० – "**एतेन – स्वरूपमात्रं न वैलक्षण्यम् ; अन्यथा स्वरूपे ज्ञातेऽप्यात्मा घट इत्यादि संशयः स्यादिति व्याख्यातम् । स्वरूपमात्रं वैलक्षण्यमिति वदतामपि हि– आत्मा घट इति घट आत्मेति वा कथं न ज्ञानम् ? उभयोरपि तदितरविलक्षणयोरेव भानेन प्रामाण्यनिर्वाहात् । नीलो घट इति च न सामानाधिकरण्यं स्यात् , घटस्वरूपातिरिक्तनीलादिस्वरूपाभावेन रक्तादिघटभेदप्रतीत्यभावप्रसङ्गात् ॥**

**व्यक्तिविशेषमात्रं तु न घटशब्दार्थः; नीलादिपदसमभिव्याहारान्यथानुपपत्त्या लक्षणया घटव्यक्तिविशेषविवक्षायां तु तत्त्वमसीत्यत्रापि लक्षणया संविन्मात्रविवक्षयैव सामानाधिकरण्यं निर्वहणीयम् , इति तत्र न भेदप्रतीतिः, इति जीवब्रह्मभेदे न तात्पर्यं तत्त्वमस्यादिवाक्यानाम् ॥"**

**समीक्षा** – इदं सर्वमस्मन्मतानवबोधविजृम्भितमकाण्डताण्डव-

मेव । तथाहि– आत्मादिपदानां स्वसमभिव्याहृतसमानाधिकरणपदार्थातिरिक्तवैलक्षण्यविशिष्टात्मादिरेवार्थः । अतः 'आत्मा घटः' इत्यत्र आत्मनि घटाभेदबोधसम्भवेन तादृशाभेदस्य बाधितत्वेन स्वरूपमात्रं वैलक्षण्यं वदतामस्माकं नैव प्रामाण्यं निर्वहति । 'नीलो घट' इत्यत्र सामानाधिकरण्यं चोक्तव्युत्पत्त्यनुसारेण मुख्यवृत्त्यैवोपपद्यते । तथा च नीलो घट इत्यत्रास्माभिः लक्षणया घटव्यक्तिविशेषमात्रमर्थ इत्यनङ्गीकारेण एतद्-दृष्टान्तेन तत्त्वमसि-वाक्यस्य संविन्मात्रार्थसाधनं नैव प्रसज्जते ॥

(७५) अद्वैत० – सर्वेषामागमानां प्रत्यक्षादिप्राप्तभेदपराणामपि, तदभ्यासस्य तद्दार्ढ्यहेतुत्वात् , भेद एव तात्पर्यादतत्त्वमसीत्येव पदच्छेद इति तु न युक्तम् ; आगमेषु प्रत्यक्षादिप्रमाणप्राप्तभेदनिर्देशस्यान्यार्थतायाः पूर्वमेवोक्तत्वेनान्यपरपुनःश्रवणत्वेन तात्पर्यग्राहकाभ्यासलक्षणाभावात् ॥

"अनन्यपरपुनःश्रवणं खलु तात्पर्यग्राहकप्रमाणमभ्यासो नाम, अन्यथा – 'अग्निहोत्रं जुहोति' 'दध्ना जुहोति' 'पयसा जुहोति' इत्यत्राप्यभ्यासापत्त्या कथं न कर्मभेदस्तत्र ॥"

**समीक्षा –** अत्र भेदनिर्देशस्यान्यार्थताकथनमेवाप्रामाणिकम् । अतः अनन्यपरपुनःश्रवणरूपाभ्यासलक्षणस्य भेदाभ्यासे समन्वयो युज्यत एव । नच प्रत्यक्षादिप्रमाणप्राप्तत्वाद्भेदस्य, अन्यपरत्वाङ्गीकारे

तन्निर्देशस्य वैयर्थ्यं स्याद् इति तदन्यथानुपपत्तिरेवान्यार्थतायां प्रमाण-मिति वाच्यम्; पुनर्निर्देशस्य दार्ढ्यजनकत्वेन वैयर्थ्याप्रसक्तेः अन्यार्थ-कल्पनाया अनावश्यकत्वात् ॥

**अद्वैत० – "नच जीवब्रह्माभेदः प्रमाणान्तरेण अन्यथा वा प्रसक्तः, इति तदभेदनिषेधेन भेदसाधनेऽप्रसक्तप्रतिषेधा-पत्तिः ॥"**

**समीक्षा –** अत्र 'अहं सर्वज्ञः' इत्यत्र सप्तमे पृष्ठे भवदुक्तदिशैव उपाधीनामुपलक्षणत्वविवक्षया संविन्मात्रविषयकत्वपर्यवसानात् अनु-वादकाभेदागमप्राप्ताभेदनिषेधेन भेदसाधने नाप्रसक्तनिषेधापत्तिः ॥

(७६) किञ्च स्वप्रकाशतया संविन्मात्रस्य स्वतः सिद्धत्वात् तदनुवादेन भेदसाधने, नाप्रसक्तनिषेधः प्रसज्जते ॥

(७७) अपिच धर्माद्यतीन्द्रियप्रपञ्चस्य चोदनालक्षणत्वेनाभेदा-गमेन तन्निषेधेऽङ्गीक्रियमाणे भवत एव ह्यप्रसक्तप्रतिषेधापत्तिः ॥

(७८) **अद्वैत० – "तत्र 'सदेवेदमि'ति कारणात्मना ब्रह्म प्रकृत्य तस्य कारणस्यात्मत्वम्, परमात्मत्वं वा निर्दिश्य तद्भिन्नस्याश्रौतस्याकारणत्वे निर्णीते कुतो वा तदभेदः प्रसज्यते, निषेद्धुं वा शक्यते?"**

**समीक्षा –** अत्र सद्विद्योपक्रमे ब्रह्मणः कारणत्वकथनात् कार्य-

कारणयोरभेददर्शनात् ब्रह्मकार्यस्य सर्वस्य ब्रह्माभेदः स्वरसतः प्रसक्तः, तमिमं प्रसक्तमभेदं निषेद्धुं 'अतस्त्वमसी'त्युपदेशोऽवसर-प्राप्तः । निषेधवाक्यस्यायमाशयः – ब्रह्मप्रपञ्चयोः उक्तः कार्यकारण-भावः न उपादानोपादेयभावरूपः, किन्तु निमित्तनैमित्तिकभाव एवाभि-प्रेतः, अतो ब्रह्मकार्यस्य जगतो ब्रह्मणा नाभेदः – इति ॥

(७९) अपिच सद्विद्योपक्रमे अभेदस्य अप्रसक्तत्वं भेदस्यैव च प्रसक्तत्वमित्यभ्युपेयता भवता अद्वैते एवोपक्रमादिकमानुकूल्यमावहति –इति वादिनस्तपस्विनो निजपूर्वाचार्याः पराकृताः – इत्यस्म-दायासो लघूकृतः ॥

(८०) अद्वैत० – "अत एव– 'तत्त्वमसि' इति नव-कृत्वोऽभ्यासस्तत्र सदृष्टान्त उपपद्यते । तत्र विरुद्धधर्मकत्वेन प्रतीयमानभेदाविवक्षयाऽभेदपर्यवसानं कुत इति शङ्कायां नव-स्वपि पर्यायेषु नव दृष्टान्ता आम्नाताः ॥"

तत्र प्रथमो दृष्टान्तः– स यथा शकुनिः सूत्रेण प्रबद्धो दिशंदिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपाश्रयते, एवमेव सोम्य तन्मनो दिशंदिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपाश्रयते इति ॥

अत्र शकुनिसूत्रयोर्यद्यपि भेदः प्रत्यक्षः, तथापि "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये"इति प्रतिपादयिष्य-माणसम्पत्तिप्रतिपादनार्थत्वात् 'तन्निष्ठस्य मोक्षोपदेशात्' 'अव-

स्थितेरिति काशकृत्स्नः' इत्यादिन्यायसिद्धसम्पत्तिर्न लोका-न्तरप्राप्तिरूपा, सा हि बन्ध एव, लोकान्तरे जन्मान्तरादिग्रहणस्य बन्धरूपत्वात् इति ज्ञापनार्थं स्वस्थानस्थितिरेव मुक्तिरित्येताव-न्मात्रमनेन प्रतिपाद्यते । स्वस्थानस्थितिस्तु 'प्राज्ञेनात्मना संपरि-ष्वक्तः' इति वचनसिद्धा, सुषुप्तस्थान एकीभूतः इति वचन-सिद्धा वा प्राज्ञात्मनाऽवस्थानमेवेत्येतावन्मात्रमनेन दृष्टान्तेन विवक्ष्यते ।।"

**समीक्षा** – अत्र शकुनिदृष्टान्तः स्वस्थानस्थितिरेव मुक्तिरिति ज्ञापनार्थः इति वदन् भवान् इमं दृष्टान्तं भेदपरमेवेत्यनुमोदते । यतः स्थानस्थानिनोर्भेदनियमः । शकुनिदृष्टान्तेऽपि शकुनेः सूत्रशङ्कुभावा-पन्नता नैव दृश्यते, दार्ष्टान्तिकेऽपि तथैव भवितुं युक्तम्, अन्यथा वैधर्म्याद् दृष्टान्तदार्ष्टान्तिकभावो भज्येत । 'प्राज्ञेनात्मना सम्परिष्वक्तः' इति वाक्यान्तरं नितान्तं स्वपरिपन्थि, "सुषुप्त्युत्क्रान्त्योर्भेदेन" इति सूत्रेण भेदपरतया निर्णीतत्वेऽपि ऐक्यपरतया आख्यानं तुण्डनिरङ्कुश-तैव । 'सुषुप्तस्थान एकीभूत' इति वचनमपि सम्परिष्वक्त इति निरव-काशश्रुतिसंवादानुरोधेन "एकीभूता तु सा सेना पाण्डवानभ्यवर्तत" इतिवत् सङ्गमनीयम् ।।

(८१) अद्वैत० – "नहि दृष्टान्तदार्ष्टान्तिकयोः सर्वात्मना साम्यं कुत्रापि; अन्यथा दृष्टान्तताया विघातात् ।।"

**समीक्षा –** यद्यपि दृष्टान्तदार्ष्टान्तिकयोः सर्वात्मना साम्यं न क्वापि । तथापि यत्किञ्चित्सादृश्यस्याप्यद्वैतोपयोगिनोऽनुपलम्भात् द्वैतोपयोगिन एवोपलम्भाच्च शकुनिदृष्टान्तः अद्वैतस्य व्याहन्त्येव ।।

**(८२) अद्वैत० – "अनेन चोत्क्रमणानपेक्षः 'अत्र ब्रह्म समश्नुते' इति श्रुतिसिद्धोऽत्रैव ब्रह्मभाव एव मोक्षः । सच तत्पदार्थस्य सविशेषैकस्वभावतायां नोपपद्यते, इति निर्विशेषं ब्रह्मैव तत्पदार्थः, यदभेदो जीवस्य तत्त्वमसिमहावाक्यतात्पर्यविषय इति सूचनद्वारा तत्त्वमसिवाक्यस्याखण्डब्रह्मपरत्वं ज्ञाप्यते, इति सविशेषब्रह्मवादः, उत्क्रमणापेक्षब्रह्मसाम्यमोक्षतावादश्च निरस्तो भवति ।।"**

**समीक्षा** – "अत्र ब्रह्म समश्नुते' इति वाक्यं ब्रह्मभावरूपमोक्षं मुख्यवृत्त्या नैव प्रतिपादयति । 'ब्रह्म'-शब्दस्य ब्रह्मभाव इत्यर्थो लक्षणयैव नेयः । मुख्यार्थबाधादिबीजस्यैवाभावात् लक्षणाया अनुत्थानमेव । "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्यो अमृतो भवति अत्र ब्रह्म" – अत्रत्यं इदम् 'अत्र'पदं प्रकृतसर्वकामनिर्मोकावस्थापरम् अथवा बुद्धिस्थश्वेतद्वीपादिस्थानपरम्, तस्मादुत्क्रमणानपेक्षब्रह्मभावो नानेन सिद्ध्यति ।।

(८३) अन्यच्च ब्रह्मसूत्रफलाध्याये उत्क्रान्तिपादे उपक्रमणसापेक्षमोक्षस्य प्रतिपादनात् तदपलापासम्भवः, तथा 'तयोर्ध्वमायन्

अमृतत्वमेति' 'परमं साम्यमुपैति' 'मम साधर्म्यमागताः'— इत्यादिबहुलतरवचनविरोधो वज्रलेपायते ॥

(८४) अद्वैत० — "द्वितीयस्तु दृष्टान्तः — यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति, नानात्ययानां वृक्षाणां रसानां समाहारमेकतां गमयन्ति, ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यहममुष्य वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः प्रजाः सति सम्पद्य न विदुः सति संपद्यामह इति त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तत्तदाभवन्ति इति ॥"

अत्रापि यद्यपि नानावृक्षरसानां तत्तद्वृक्षरसत्वेनोपाधिना भेदो वर्तते, प्रतीयते च; तथाऽपि मधुभावं प्राप्तानां मधुरूपातिरेकेण न रूपान्तरम्, नवा तत्तद्रसत्वोपाधिप्रयुक्तभेदानुभवस्तेषां तेषाम्, इति तेनैव न्यायेन यावत्तत्तच्छरीरोपाधिसत्त्वमेव जीवानां भेदः, तदनुभवो वा, नतु ब्रह्मभावं प्राप्तानाम्, इति निर्भेदस्वरूपमेव मोक्षस्वरूपम्, सति सम्पत्तिर्वैत्येवात्र विवक्षणात् नात्रापि दृष्टान्ते भेदकथा ॥"

समीक्षा — अत्र तत्तद्वृक्षरसत्वस्य तत्तद्वृक्षरसस्वरूपभूतधर्मतया सर्वप्रामाणिकसिद्धत्वात् तस्यौपाधिकत्वकथनम् असाम्प्रतमेव । तस्मात्तत्तद्वृक्षरसानां यावदाश्रयभाव्येव भेदः ॥

(८५) यच्च 'मधुभावं प्राप्तानां मधुरूपातिरेकेण न रूपान्तरम्'– इति यद् अभाणि तन्न युज्यते । तथा सति घटत्वातिरेकेण घटस्य मृत्त्वाख्यरूपान्तरमपि न स्यात् । तथा च 'मृद् घटः' इति सामानाधिकरण्येन प्रयोगः 'घटो घटः' इतिवत् अपार्थकः स्यात् । अतः मधुरूपातिरेकेण तत्तद्रसत्वाख्यरूपान्तरं मधुदशायामपि दुरपह्नवम् । रासायनिकाः तत्तद्रसान् विश्लेषयितुं पारयन्ति इति प्रत्यक्षानुभवमधिरूढे वस्तुनि भवानपि न विप्रतिपद्येत । अतः ब्रह्मरूपातिरेकेण जीवानां मोक्षे रूपान्तरं नास्तीत्यत्र नायं दृष्टान्तो घटते ॥

(८६) किञ्च **'न विवेकं लभन्ते'** इति वाक्येन तेषां भेदः नापलप्यते, केवलं भेदप्रतीत्यभाव एव प्रतिपाद्यते । भेदप्रतीतिरपि ज्ञानिनां सर्वज्ञस्य ईश्वरस्य च भवत्येव ॥

(८७) अद्वैत० – **एतेन – तृतीयोऽपि दृष्टान्तो व्याख्यातः । स यथा – इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रमेवापियन्ति. समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीति एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामहे – इत्यादि ॥**

**अत्रापि यद्यपि नदीसमुद्रयोर्नदीत्वेन समुद्रत्वेन च भेदो वर्तते; तथाऽपि स भेदः कार्यात्मनैव, नतु कारणात्मना तत्र नदीसमुद्रयोः कार्यकारणभावेऽपि– "मया ततमिदं सर्वं जगदव्यक्त-**

मूर्तिना'' इत्युक्तरीत्या नदीनां समुद्रात्मता, घटादीनां मृदात्मतेव न व्यक्ता, इति नदीत्वेनैव यथा समुद्रे तल्लयपर्यन्तं प्रतीतिः; एवमत्रापि बन्धावस्थायां जीवात्मतयैव प्रतीतिः ; यथा च घटादीनामनभिव्यक्तनामरूपात्मना मृदात्मनामपि घटाद्यात्मता नामरूपात्मता च व्यक्तावस्थायाम्, इति सर्वेषां कार्याणां कारणात्मतैव सर्वत्राऽनुवर्तमाना सत्या नदीनामिव समुद्रात्मता। घटाद्यात्मता तु व्यावर्तमाना न परमार्थः, एवमुपाधौ निवृत्तायामुपाधीनामिवोपहितानां जीवानामप्यखण्डब्रह्मभाव एव परमार्थः ॥''

**समीक्षा** – अत्र उपनिषदि नदीसमुद्रौ दृष्टान्तीकृतौ, तयोश्च भेदो वर्तत एवेति भवताप्यूरीकृतः, मूलकारणात्मना नदीसमुद्रयोरैक्यं भवता कथ्यते, उपनिषदि मूलकारणं दृष्टान्तत्वेन नोपात्तम् । 'नदीसमुद्रयोः कार्यकारणभावेऽपी'ति पक्षान्तरं समाश्रितम्, तच्चाप्रामाणिकम्, नद्यस्तावत् प्रायेण पर्वतेभ्यः स्यन्दन्ते; गङ्गा तु त्रिविक्रमाङ्गुष्ठनखनिर्भिन्नब्रह्माण्डकटाहावरणभूतजलभूतैव स्वर्लोकाद्भुवमवतीर्णा खलु ? अत एव समुद्रस्य नदीपतित्वमेव प्रथितम्, न पुनर्नदीपितृत्वम् । एवञ्चायं तार्तीयीको दृष्टान्तः अभेदवादिनामद्वैतिनां प्रतिकूल एव । जले जलान्तरप्रवेशे वृद्धिरेव दृश्यते । इयमेव दशा नदीसमुद्रसङ्गमस्थले । समुद्रस्यातिमहत्त्वाद् एष वृद्धिविशेषः परमस्माभिर्न ज्ञायते इत्येव ॥

(८८) **अद्वैत० – 'मुक्तौ नाहमिति प्रतीतिरपि' इति सर्वेषां जीवानां जीवत्वमपि मुक्तौ निवर्तते ॥**

**समीक्षा –** अत्र मुक्तावपि 'अहमस्मी'ति प्रतीतिः प्रामाणिकी, 'अहमस्मि प्रथमजा' इत्यादिमन्त्रेषु तथा श्रवणात् ॥

(८९) किञ्च जीवस्य जीवभावः नैव निवर्त्यः, 'जीवभूतः सनातनः' इति गीतावचनादिति ॥

(९०) **अद्वैत०–"तुरीयस्तु दृष्टान्तः – स एष जीवेनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति–इति । अत्रापि यद्यपि जीववृक्षयोर्भेदः प्रतीयते; तथाऽप्यत्र वृक्षशब्देन देहस्योपाधेरेव विवक्षणात् क्षेत्रक्षेत्रज्ञविभागप्रतिपादनद्वारा स्थूल-सूक्ष्म-कारणशरीरविलापनेन तुरीयावस्थैव जीवस्य मुख्यं स्वरूपम्, यदेवातीतसमष्टिस्थूल-सूक्ष्म-कारणशरीरं तत्पदलक्ष्यार्थाभिन्नं मुक्तात्मनः स्वरूपमिति प्रतिपादनद्वारा अखण्डं ब्रह्मैव मुख्यं तत्त्वमित्यनेन विवक्ष्यते .... ॥"**

**समीक्षा –** अत्र वृक्षशब्देन देहस्य उपाधेरेव ग्रहणे पेपीयमानमोदमानत्वे उपचरिते स्याताम् – इत्यादिस्फुटा दोषा अस्मदाकरग्रन्थेऽभिहिता अपिताननवबुध्यैव मुधा जल्पाकतामाविष्कुरुते भवान् ॥

(९१) किञ्चास्मिन् दृष्टान्ते स्थूल-सूक्ष्म-कारणशरीरविलापनेन तुरीयावस्थैव जीवस्य मुख्यं स्वरूपम्—इत्यारभ्याखण्डं ब्रह्मैव मुख्यं तत्त्वम् इत्यन्तं गदितं भवन्मानोरथिकं तत्त्वम् अस्मिन् दृष्टान्ते दुरासदम् ॥

(९२) अद्वैत०—"एतेन पञ्चमोऽपि दृष्टान्तो व्याख्यातः—स यथा न्यग्रोधफलमत आहरेति इदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीति अण्व्य इवेमा धाना भगव इति किमत्र पश्यसीति नकिञ्चन भगव इति तं होवाच यं वै सोम्यैममणिमानं न निभालयसे एतस्यैषोऽणिम्न एष महान् न्यग्रोधस्तिष्ठति – इति ।।"

तत्र प्रथमेन दृष्टान्तेन "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि"ति सद्विद्यायाः प्रथमवाक्ये सर्वस्य प्रपञ्चस्य सदात्मना प्रतीयमानत्वं सच्चिदानन्दरूपब्रह्मणः सदात्मना ज्ञायमानस्यैवोपादानत्वनिवन्धनम् । तच्च सत आत्मस्वरूपत्वात् चिदात्मन आनन्दात्मनाऽज्ञानेनैव विवर्तोपादानत्वमेवेति "तदैक्षत वहु स्यां प्रजायेय" इति वाक्यान्ततात्पर्यं विवक्ष्यते । तेन च "सदेव सोम्येदम्" इति सदात्मना वाधायां सामानाधिकरण्यमचेतनप्रपञ्चस्येति सूचनद्वाराऽचेतनजगदुपादानत्वेन सप्रपञ्चमपि ब्रह्माद्वितीयमेकमेवेति सजातीयविजातीयादिव्यावृत्तिर्ब्रह्मण उपक्षिप्यते । तत्र "कृत्स्नप्रसक्तिर्निरवयत्व-

शब्दकोपो वा ?" इति न्यायोपक्षिप्यमाणो निरवयवस्याति-सूक्ष्मस्य च कथमुपादानत्वमिति शङ्काविशेषः "श्रुतेस्तु शब्द-मूलत्वादिति"न्यायेन यत् परिह्रियते, तदुपष्टम्भनार्थं पञ्चमो दृष्टान्तः ॥

**समीक्षा** – अत्र 'सदेव' इति वाक्ये श्रौतं सत्त्वरूपमर्थं परित्यज्य सदात्मना प्रतीयमानत्वम् इत्यन्तं कुतो नयति भवान् ? ॥

(९३) किञ्चात्र विवर्तोपादानत्वे विवक्षिते 'तदैक्षत' इति कर्तृत्वाविनाभूतेक्षितृत्वव्यपदेशोऽसङ्गत एव स्यात् । नहि रजतारोपाधि-ष्ठानभूता शुक्तिः कदापि ऐक्षत इत्युच्यते । अतः ईक्षितृत्वमारोपाधिष्ठान-तायामनुपयुक्तम् । तच्च ईक्षितृत्वं 'तदैक्षत' इति श्रुतौ स्फुटं श्रूयते इति विवर्तोपादानत्वं न सम्भवति ॥

(९४) अन्यच्च 'सदेव सोम्येदम्' इति बाधायां सामानाधि-करण्यं यदुच्यते तद् जघन्यवृत्त्याश्रयणेनैव । अस्मद्रीत्या मुख्यार्थे (सति) सम्भवति तत्परित्यागो निर्मूलः ॥

(९५) किञ्च बाधायां सामानाधिकरण्यस्य प्रसक्तिर्बाधकाले । न ह्येतावत्पर्यन्तं बाधः सञ्जातः – इति भवताप्यभ्युपेयते – इति कथं बाधायां सामानाधिकरण्यम् ? ॥

(९६) किञ्च अवतरणिकायां 'निरवयवस्य अतिसूक्ष्मस्य कथमुपा-

दानत्वम् ?" इति यदाशङ्कितं तत्किं परिणाम्युपादानत्वमभिप्रेत्य उत विवर्तोपादानत्वम् ? नाद्यः, पूर्वं सद्भिर्चोपक्रमे त्वदुक्तरीत्या विवर्तोपादानस्यैव विवक्षितत्वेन परिणाम्युपादानशङ्काया अनवसरदुःस्थत्वात् । अथ विवर्तोपादानत्वं तर्हि निरवयवस्येति हेतुगर्भविशेषणस्यासङ्गतिः, निरवयवेऽप्याकाशे नैल्यारोपाधिष्ठानत्वदर्शनात् । तथाऽतिसूक्ष्मत्वविशेषणमप्यसङ्गतम्, अतिसूक्ष्मेऽपि परमाणौ आरोपाधिष्ठानत्वसम्भवात् ॥

(९७) अद्वैत० – **"अयं हि दृष्टान्तः 'स एषोऽणिमे'ति सर्वप्रपञ्चकारणस्य सतोऽणुत्वं नाणुपरिमाणत्वेन, किन्तु दुर्विज्ञेयत्वेन । तच्च सर्वप्रपञ्चकारणत्वेऽप्युपपद्यत इत्युपपादयति ॥"**

**समीक्षा** – अत्राणुत्वं दुर्ज्ञेयत्वाभिप्रायेणेति चेत् पुनरारोपाधिष्ठानत्वासम्भवस्तदवस्थ एव, अधिष्ठानज्ञाने सति खलु तत्रारोपः ? ॥

(९८) किञ्चातिसूक्ष्मस्य कथमुपादानत्वमिति शङ्कायां "स एषोऽणिमा" इत्यनेन पुनरतिसूक्ष्मत्वमेवोक्तम् । दुर्विज्ञेयत्वरूपं तदिति विवरणमुदक्षरमेव ॥

(९९) अद्वैत० – **तथाऽपि केवलं सदात्मनोऽपि प्रपञ्चस्य नामरूपात्मनैव कथं प्रतीतिः, न तु व्यवहारदशायामपि सच्चिदात्मना ? कथञ्च शुद्धब्रह्मोपादानमशुद्धात्मना प्रतीयते, नतु स्वीयेन शुद्धेन रूपेण ? कथं च 'मया ततमिदं सर्वं**

जगदव्यक्तमूर्तिना' इति गीतोपपद्यत इति शङ्कापरिहारार्थं षष्ठो दृष्टान्तः । षष्ठदृष्टान्तस्याद्वैत एव स्वारस्यम् । स यथा – लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति सह तथा चकार तंहोवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमिति अन्तादाचामेति कथमिति लवणमिति अभिप्राश्यैनदथ मोपसीदथा इति तद्ध तथा चकार तच्छश्वत् संवर्तते तं होवाचात्र वाव सत्सोम्य न निभालयसेऽत्रैव किलेति ॥

तेन च "सृष्टेः पूर्वं सदात्मनोऽपि चेतनाचेतनात्मकस्य सर्वस्य प्रपञ्चस्य सृष्ट्यनन्तरं न सदात्मनैव प्रतीतिः किन्तु नामरूपात्मना व्यक्तेन, यथाऽलवणावस्थायामुदकात्मतैव, सलवणावस्था तु रूपान्तरेण, इति षष्ठेनोदाहरणेन विशदीक्रियते ॥"

**समीक्षा** – अत्र **सृष्टेः पूर्वं सदात्मनोऽपि** इत्यस्य कोऽर्थः ? सदभिन्नत्वम् ? उत सति कल्पितत्वम् , आहोस्वित् सद्व्यतिरेकेणाभावः ? नाद्यः, मिथ्याभूतस्याचेतनस्य सदभिन्नत्वे अपसिद्धान्तापातात् । न द्वितीयः, सृष्टेः पूर्वमचेतनादिकल्पनाया एवासंभवात् । नापि तृतीयः, तद्व्यतिरेकेणासत्त्वस्य तदात्मकत्वप्रतीतौ अप्रयोजकत्वात् । घटसृष्टेः पूर्वं दण्डव्यतिरेकेण असतः घटस्य दण्डात्मना प्रतीत्यदर्शनात् । भवता च सदात्मकत्वप्रतीतिप्रयोजकतया व्यपदिश्यते । लवणदृष्टान्तस्यायमाशयः–

यथा जलमभिव्याप्य पृथग् विद्यमानमपि लवणं पृथङ् नोपलभ्यते । एव-मेव सर्वगतोऽपि परमात्मा पृथग् नोपलभ्यते इति ॥

लवणं यदा जले विलीयते तदा जलसत्ता लवणसत्ता चेति पृथक् पृथगेवेति नात्राभेदस्यावकाशः । यदि च लवणघनखण्डस्य जलनिक्षिप्तद्रीयद्रुतभागस्य चैक्यात् सोंऽशोऽत्र दृष्टान्तत्वेनाभिधित्सितः तदा तत्र विकारविकारिभावस्य सत्त्वात् दार्ष्टान्तिकस्य ब्रह्मणो निर्विकारत्वात् दृष्टान्तदार्ष्टान्तिकभाव एव नोपपद्येत ॥

**(१००) अद्वैत० – "तथा च यथा लवणोदकयोः परस्पराव्यतिकरावस्थायां तत्तद्रूपमात्रेण भानम्, परस्परव्यतिकरे तु लवणोदकत्वेन, एवमेव परस्परतादात्म्याध्यासात् मायिकनामरूपात्मकप्रपञ्चात्मना व्यक्तं भानम्, सदात्मना त्वव्यक्तमिति – 'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना' इति सुष्ठु लगत्यद्वैतवादे ॥"**

**समीक्षा** – 'शुक्त्या रजतं ततम्' इति प्रयोगाभावात् ब्रह्मण आरोपाधिष्ठानत्वे 'मया ततमिदम्' इति प्रयोगो नाभविष्यदेव । किन्तु वह्निना ततः अयःपिण्डः इतिवत् भेदे एवायं प्रयोग अञ्जसा सङ्गच्छते ॥

(१०१) अद्वैत० – "स यथा- 'यथा सोम्य पुरुषं गान्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्' – इत्यादि ।

**अत्रापि—यद्यपि गान्धारपुरुषयोर्भेदो वर्तते; प्रतीयते च; तथाऽपि साधनावस्थायामद्वैतस्याद्वैतवादेऽनभ्युपगमात् , उपायमात्रप्रदर्शनतात्पर्यकत्वाच्चोक्तदृष्टान्तस्य नात्र विरोधः; यावद्ब्रह्मसाक्षात्कारं व्यावहारिकभेदस्याद्वैतसिद्धान्ताविरोधात् । नचात्र प्राप्यप्रापकाभेदप्रतिपादनं लक्ष्यम् , तस्य प्राचीनैरुदाहरणैः प्रतिपादितत्वात् , किन्तूपायांश एवायं दृष्टान्तः, इति प्राप्यप्रापकभेदप्रतीतिरत्र न व्याहन्यते ।।"**

**समीक्षा —** नवमे पृष्ठे **'नवकृत्वस्तत्त्वमसि—वाक्याभ्यासस्याद्वैत एव स्वारस्यम्'** इति प्रतिज्ञाभङ्गोऽस्य दृष्टान्तस्य भेदपरत्वं वर्णयता भवतैव प्रादुष्कृतः - इत्यस्मदीयप्रयासो न्यूनीकृतः ॥

(१०२) किञ्च साधनावस्थायामद्वैतस्यानभ्युपगमे-'तत्त्वमसि' इति लटा वर्तमाननिर्देशो न स्यात् । किन्तु 'तत्त्वं भविष्यसि' इत्येव प्रयोगोऽभविष्यत् ॥

(१०३) किञ्चात्र 'उपायमात्रदर्शनतात्पर्यकत्वाच्च' इति संकोचः किन्निबन्धनः ? प्राप्यप्रापकयोरभेदोऽपि पूर्ववत् अत्रापि लक्ष्यः कुतो न-स्यात् ? पौनरुक्त्यात् इति चेत् – "प्राचीनैरुदाहरणैरि"ति बहुवचनेन पौनरुक्त्यस्य गुणत्वेनाङ्गीकारात् । अत्र प्राप्यप्रापकयोर्भेद एव दुरपह्नवो दृश्यते इति तदविवक्षां यदि विधत्ते भवान् तदा शकुनिसूत्रादिदृष्टान्तेष्वपि प्राप्यप्रापकयोर्भेदस्यैव दृश्यमानत्वेन तत्रापि तद्विवक्षां न व्यधास्यत् ॥

(१०४) अद्वैत० – "तत इयं शङ्का शिष्यस्योत्तिष्ठति – 'सत्यं भिदा सत्यं भिदे'त्यन्यत्र प्रतिपाद्यते, अभेदस्तु प्रकृते सत्य इति प्रतिपाद्यते। किमत्र तत्त्वम्? किं जीवात्मनोऽहंकर्त्रादि-रूपेणैव मुक्तौ स्थितिः, उत स्वप्रकाशसंविन्मात्रात्मनेति; तन्निवारणार्थमष्टमो दृष्टान्तः । 'अष्टमदृष्टान्तस्याद्वैते स्वारस्यम्' स यथा – 'अथ यदाऽस्य वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ स न जानाति' इति। अत्रापि यद्यपि जीवप्राणादीनां भेदः प्रतीयते; तथापि स याव-त्प्राणादिलयम्, सर्वविलये तु न ज्ञातृज्ञेयादिभेदसत्त्वम्, किन्तु स्वप्रकाशसंविन्मात्रावस्थानमित्येव विवक्ष्यते। अत्र परस्यां देव-तायां सम्पत्तौ ज्ञातृज्ञेयादिविरहप्रतिपादनात् सर्वात्मना ब्रह्मभाव एव तत्त्वमसि–वाक्यार्थः इति विशदमवगम्यते। अत्र प्राकृत-प्रलय एव ज्ञातृज्ञेयादिभेदभावविरहो यद्यपि निरूप्यते; तथापि तत्रैव तथात्वे कैव कथा मुक्तौ? यत्र सर्वस्य वीजाभावेना-वस्थेति मत्वा प्राकृतप्रलयोदाहरणम्॥"

**समीक्षा** – अत्र साधारणमरणोत्तरं यमलोकदुःखाद्यनुभवः श्रुत्यादिषु प्रसिद्धः। अतः अत्र ज्ञातृज्ञेयादिभेदोच्छेदकथनम् "भस्मी-भूतस्य देहस्य पुनरागमनं कुतः" इति लौकायतिकीं भणितिमञ्जसा स्मरणपथमानयति। कर्मक्षयाद्युत्तरं जायमानपरममुक्तावपि प्राणादिलया-नन्तरम् अर्चिरादिपथदर्शनं ब्रह्मलोकं गतस्य 'सोऽश्नुते सर्वान् कामान्

सह' इति श्रूयमाणसर्वभोगानुभवश्च नैव युज्येयाताम् । 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इत्यादि तु आपादनपरम्, तस्मात् इदं वाक्यं परममुक्तावपि ज्ञातृज्ञेयभावं नोच्छेदयति ॥

(१०५) अद्वैत० – "**नवमो दृष्टान्तस्तु आत्मनोऽकर्तृत्वमेव स्वभावः, कर्तृत्वं त्वारोपितम्, इत्यहमात्मना जीवस्य मुक्तौ नानुवृत्तिरिति निरूपयितुम् । स यथा– 'पुरुषं सोम्य हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति । स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते । सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते । अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते । स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय तप्तं परशुं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ।' अयं हि दृष्टान्तोऽकर्तृत्वानुसन्धानेन कर्तृत्वाद्यारोपितसर्वबन्धनिवृत्त्या स्वप्रकाशसंविदात्मतैव संपत्तिः, मुक्तिर्वेति शपथेनोपपादयति, इति स्तेनापहार्ययोर्भेदप्रतीतिरत्राकिञ्चित्करी; कर्तृत्वाकर्तृत्वयोरकर्तृत्वसत्यतायां तदनुसन्धानेनैव बन्धस्य मुक्तेश्चात्र विवक्षणात् ॥**"

**समीक्षा** – अत्र अपहर्ता स्वस्यापहर्तृत्वमपलपति चेत् स दण्ड्यो भवति । अनेन 'विद्यमानं कर्तृत्वं नापलपनीयम्' इत्येव सिद्ध्यति, नतु कर्तृत्वमारोपितमिति । अन्यथा कर्तृत्वं सर्वात्मनाऽऽरोपितं चेत् अपहर्ता न दण्ड्येत ॥

(१०६) किञ्चात्र विशेषतः स्तेनदृष्टान्तोपन्यासः ऐक्यवादिनमेव दार्ष्टान्तयति, तथाहि — लोके परकीयवस्तुनि स्वत्वाभिमन्ता वस्त्वन-पहरणेऽपि स्तेनतामाप्नुते । प्रकृते ऐक्यवादी स्वेतरब्रह्मणो विभूतिरूपं ब्रह्मत्वं स्वानधिकृतं स्वत्वेनाभिमन्वानः स्तेनो भवति । अत एव— "ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः । ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः ॥" इति महाभारतसंवादोऽत्रानुगुणो भवति । स्तेनस्य दण्ड्यत्वकथनात् ऐक्यवादिनोऽप्युक्तदिशा ब्रह्मस्तेनत्वादनर्थप्राप्ति-रिति सूच्यते ॥

(१०७) **अद्वैत० – "यत्तु–'सन्मूलाः सोम्येमाः जाःप्र सदायतनाः सत्प्रतिष्ठाः' इत्यादिना भेद एव प्रतिपाद्यते – इति तत्र सन्मूलत्वस्य सदुपादानकत्वरूपत्वात् तस्य च 'सदेवेदम्' इत्युपक्रमावगततादात्म्योपपादककल्पितभेदपरत्वस्यैव सम्भवा-दाभेद एव तात्पर्यम् ; अन्यथा 'सदेवेदम्' इति सामानाधि-करण्यं नोपपद्यते ॥"**

**समीक्षा** – अत्र मूलशब्दस्य प्रथितं सामान्यकारणवाचित्वं विहाय प्रमाणमन्तरा उपादानरूपार्थकथनं नोपपद्यते । नच 'सदेव इदं' इति सामानाधिकरण्यमन्यथा नोपपद्येतेति वाच्यम् , इदं शब्दस्य 'सुपां सुलुक्' इत्यनुशासनेनास्येत्यर्थकतया सामानाधिकरण्यस्याविवक्षित-त्वात् । अस्य अग्रे, सत् = उत्तमं 'सच्छब्द उत्तमं ब्रूयात्' इति नैघण्टुकाः । ब्रह्म आसीत् इत्यर्थ एवोपपद्यते । 'आपो वा इदमग्र आसुः'

इति बृहदारण्यकवाक्यस्य शाङ्करभाष्ये अप्शब्देन पञ्चभूतानीव कर्माण्यपि उपलक्षिततया व्याख्यातानि । तत्र च पञ्चभूतानामुपादानत्वेन सामानाधिकरण्यसम्भवेऽपि अतद्भूतानां कर्मणां सामानाधिकरण्येन निर्देशः नोपपद्यते । अतस्तत्र इदमित्यस्य 'अस्य' इत्यर्थस्यैव स्वीकर्तव्यत्वेन तत्समाख्यया अत्रापि ईदृगर्थस्यैव प्रसक्तिरुचिता । तत्रापि 'सदेवेदम्' इत्यत्र सामानाधिकरण्यं भाक्तमेव, यतः मिथ्याभूतस्यास्य प्रपञ्चस्य सद्भेदासम्भवात् । ततोऽस्माकं मुख्यवृत्त्या व्याख्यानमेव ज्यायः ॥

(१०८) अद्वैत० – "वस्तुतस्तु – सोऽपि वन्धावस्थायामेव; कार्यकारणभावस्य तदैव संभवात्, मुक्तात्मनां परस्परम्, मुक्तात्मनः परमात्मना चाभेदे नोक्तं वाक्यं प्रमाणम्, सर्वोपाधिशून्यस्यानावृतसंविन्मात्रस्याखण्डस्यानाद्यविद्याकल्पितसदादिभेदसखण्डोपादानत्वाभावेन जगतः 'सदेवेदम्' इति प्रकरणगतसत्पदार्थत्वाभावेन, मुक्तात्ममूलत्वस्य मुक्तात्माभेदस्य चाविरोधित्वात्, मुक्तात्मनाम् अकार्यत्वेन सन्मूलत्वाभावाच्च ॥

एतेन –

"स्रष्टृत्वादाश्रयत्वाच्च मुक्तानां च जगत्प्रति ।
स्थापनाच्च विभुर्विष्णुरन्यः संसारिणो मतः ॥

इत्यपि व्याख्यातम्; संसारिब्रह्मणोर्भेदस्य, नियम्यनियामकभावस्य चाद्वैतेऽप्यविरोधात् ॥"

**समीक्षा** — अत्र सन्मूलपदेन मुक्तात्मनां ब्रह्मकार्यत्वमस्मदनुक्तं कथमुपालभसे ? अस्माभिस्तु 'सत्प्रतिष्ठा' इति पदेन सतः सकाशात् प्रतिष्ठा = प्रकृष्टस्थितिः मुक्तिरूपा स्थितिः यासां ताः– इति व्याख्याय मुक्तपरमात्मनोर्भेदः स्वरसतः श्रूयमाण एवाङ्गीक्रियते ॥

(१०९) किञ्च श्रीमदाचार्योदाहृतं स्रष्टृत्वादिति वचनं मुक्तस्थापकत्वस्याभिधानात् मुक्तपरमात्मनोर्भेदं प्रतिष्ठापयत् तव प्रतिकूलमेव ॥

(११०) अद्वैत० – **"अत एव–'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्यपि – व्याख्यातम् । इदं हि जीवस्य परमात्मनाऽभेदम् , जीवपरमात्मनोः स्वरूपैक्यं वा बोधयति अनेन जीवेनात्मनेति । अत्र जीवशब्देनानिरुद्धाख्यस्यैव परमात्मनो बोधनमिति तु – 'अंशो नानाव्यपदेशात्' इत्यादौ व्यूहावताराणां सर्वेषां परमात्मस्वरूपांशत्वस्य व्यवस्थापनात् , प्रद्युम्नादिरूपेणापि परमात्मनोऽकारणत्वे प्रमाणाभावात्, अन्यथा स्वरूपैक्यासंभवात् , जीवपदस्य प्रसिद्धसंसारिजीवपरस्यानिरुद्धमात्रपरत्वे प्रमाणाभावाच्च नोपपद्यते ।।"**

**समीक्षा**–अत्र व्यूहावताराणामैक्येऽपि एकैकरूपेणैकैककार्यस्यैव अचिन्त्यैश्वर्यबलेन सम्पादनात् अनिरुद्धरूपेणैवैतद्देहप्रवेशेन प्राणधारकत्वं युज्यते । तच्च सप्रमाणोपन्यासमस्मदाचार्यैरुपनिषद्भाष्यादौ समर्थितम् ।

जीवशब्दस्यानिरुद्धार्थकत्वे 'जीव' इति 'अनिरुद्धस्याख्या' इति श्रुतिरुदाहृतैव । लोके जीवशब्दस्य संसारिणि प्रसिद्धिसद्भावेऽपि उक्तश्रुतिबलात् 'शास्त्रस्था वे'त्यादिपूर्वमीमांसान्यायेन शास्त्रप्रसिद्धयनुसारेणार्थकथनमेव न्याय्यम् । असति विशेषशास्त्रे एव लोकप्रसिद्धेरवकाशात् ॥

(१११) **अद्वैत० – "तत्र तत्र विष्णुर्जीव इत्युक्तिस्तु सर्वजीव-ब्रह्माभेदसिद्धान्तमेव स्वरूपात्मना बोधयति, न तु जीवशब्दवाच्यत्वमात्रं परमात्मनः; सर्वशब्दानां लौकिकानां वैदिकानाम्; किं बहुना ? कर्मकाण्डघटकवसन्ते इत्यादिपदानामपि परमात्मपरत्वमेव मुख्यमिति परविद्यापक्षपातिनां किमत्र जीवशब्दमात्रस्य परमात्मपरत्वव्युत्पादने परिश्रमेण ? अद्वैतमतेऽपि स्वरूपैक्यमादाय सदात्मना सर्वस्य परमात्मत्वम्, तद्वाचकपदवाच्यत्वं वा न विरुद्ध्यते ॥"**

**समीक्षा** — अत्र "विष्णुर्जीव इति प्रोक्तः सततं प्राणधारणात् । स प्रविश्य शरीरं च स्थावरं जङ्गमं तथा ॥ महाभूतानि च विभुः त्रिवृत्करणपूर्वकम् । संसारिणं भ्रामयति सदैवान्यत्वलक्षणम्॥" इति तत्त्वनिर्णये श्रीमदाचार्योदाहृतप्रमाणवचनविरोधेन 'विष्णुर्जीवः' इत्युक्तिः जीवब्रह्मणोरभेदं नैव बोधयति; अपि तु परमात्मनो जीवशब्दवाच्यत्वमेव ॥

(११२) किञ्च सकलशब्दानां समन्वयाध्यायोक्तविधया भगव-

द्वाचकत्वेऽपि केषाञ्चित् जीवादिशब्दानां पूर्वोदाहृताद्यनुशासनबलेन इतरशब्दवैलक्षण्येन शीघ्रोपस्थितिजनकत्वसत्त्वेन तत्समर्थनपरिश्रमो नापार्थकः ।।

(११३) अद्वैत० – "तत्र 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इत्यादौ 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इति न्यायात् अविद्याश्रय-विषयसत्पदार्थपरमात्मस्वरूपमात्रं विवक्ष्यते, जीवत्वं तु तस्य शरीरप्रवेशमात्राधीनम्, शरीरान्तर्गतान्तःकरणाभिव्यङ्ग्यत्वमात्रप्रयुक्तं वा, यदुपपादनार्थम् 'अनेन जीवेनात्मना' इति वाक्यम्, इति नास्य वाक्यस्य वैयर्थ्यमद्वैतमते ।।"

**समीक्षा** — 'ऐक्षत' इत्यत्र ईक्षणकर्तृत्वेन व्यपदिष्टः अविद्याश्रयः सत्पदार्थो भवितुं न क्षमते । 'आश्रयत्वविषयत्वभागिनी' इत्यादिसङ्क्षेपशारीरकवचनानुसारेण तस्य निर्विशेषत्वात् । निर्विशेषत्वस्य च ईक्षणकर्तृत्वरूपविशेषासम्भावात् ।।

(११४) किञ्च नहि जीवत्वं शरीरप्रवेशमात्राधीनम्, 'अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यत्र जीवभावस्य शरीरप्रवेशात्पूर्वसिद्धतया श्रूयमाणत्वात् ।।

(११५) अद्वैत० – "परमते तु सत्पदार्थस्य परमात्मन एव स्रष्टृत्वाम्नानात् परमात्मनोऽनिरुद्धात्मनैव स्रष्टृत्वप्रति-

**पादनं वितथम् । न च तत् संभवत्यपि; अन्यथा 'तत्तेज ऐक्षत' इत्यादावपि तस्यैव स्रष्टृत्वेन विवक्षया आवश्यकत्वात् किमर्थं वा 'अनेन जीवेने'ति वाक्यम् ? अद्वैतमते तु जीवत्वं परमात्मन औपाधिकम् इति निरूपणेन तत् सफलम् – इति 'जीवेन' इति पदेन साकमात्मना-पदमपि प्रयुज्यमानं सत्यपि विशिष्टरूपेण जीवब्रह्मणोर्भेदे स्वरूपेण तदैक्यपरमेव । अत एव 'तत्त्वमसि' इत्यभेदे सामानाधिकरण्यम्, इति सर्वं सुष्ठु, इति प्रथमादि-दार्ष्टान्तिकवाक्यपरीक्षा ॥''**

**समीक्षा –** अत्र पूर्वोक्तदिशा रामकृष्णादिरूपेष्विवैकैकरूपे एकैककार्यकर्तृत्वस्य प्रमाणसिद्धत्वात् अनिरुद्धात्मना यत्किञ्चित्पदार्थ-स्रष्टृत्वस्याविरोधात् वैतथ्यापादनमेव वितथम् ॥

(११६) अन्यच्च अनेन जीवेन आत्मना इत्यत्र जीवत्वविशिष्ट-स्वरूपेणेत्येव मुख्यार्थः, 'जीवभावोपलक्षितस्वरूपेणे'ति भवत्कल्पितोऽर्थो ह्यमुख्यार्थः । प्राक् **'जीवपदस्य प्रसिद्धसंसारिजीवपरस्य'** इति प्रसि-द्धार्थपरित्यागोऽनुचित इति त्वदुक्तदूषणभुजङ्गी सम्प्रति त्वामेवानुधावति ॥

(११७) किञ्च 'अनेन जीवेनात्मना'इत्यत्र ऐक्यस्य विवक्षितत्वे पुनस्तत्त्वमसीत्यत्रापि तस्यैवोक्तौ पौनरुक्त्यापातः । अस्मन्मते तु एतत्-प्रकरणे बहुवारं भेदोक्तावपि सन्मूलत्व-सदायतनत्व-सत्प्रतिष्ठत्वादिभिन्न-भिन्नविरुद्धधर्मवत्तया भेदकथनान्न पौनरुक्त्यप्रसङ्गः ॥

(११८) अद्वैत०—"एतेन—एवमेव खलु सोम्येमा सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामहे'— इति द्वितीयदार्ष्टान्तिकवाक्यमपि व्याख्यातम् । सत्यम्, 'सति संपद्य' इति तत्र भेदाज्ञानमेव प्रतिपाद्यते। अविज्ञानं तु भेदस्य बाधेनापि भवति, सत्त्वेऽपि तद्ग्राहकप्रमाणाप्रवृत्त्याच । वयं तु मन्यामहे बाधात्, तत एव तद्ग्राहकप्रमाणाप्रसराच्च तदिति । 'त इह व्याघ्रो वा सिंहो वा' इत्यादि तु सति सम्पन्नानां सुषुप्त्यवस्थायामपि न भेदज्ञानमित्येव बोधयति, न तु भेदाज्ञानेऽनर्थम्; अनाकाङ्क्षितत्वात् तद्वाक्यमात्रे तत्प्रयोजनस्य ॥"

**समीक्षा** — अत्र सुषुप्त्युपक्रमे बाधज्ञानस्याननुभवात् 'भेदाज्ञानं बाधवशात् इति वक्तुं' न युज्यते । किन्तु भेदसत्त्वेऽपि तद्ग्राहकप्रमाणाप्रवृत्त्यैव ॥

(११९) किञ्च 'सति सम्पद्य' इत्यनेन प्राप्यप्राप्तृभावेन सुषुप्ति काले भेदमवगमय्य न विदुः, इति कथनात् सतो भेदस्याग्रहणमेव सिद्ध्यति । भवता तु 'सम्पद्य' इत्यत्र जघन्यवृत्त्यैव ऐक्यरूपार्थः समानेयः ॥

(१२०) अन्यच्च उपनिषद्यनुपदमेव वक्ष्यमाणस्य 'सत आगम्य न विदुः सत आगच्छामहे' इति विद्यमानभेदाज्ञानस्यैवाभिधानात् । अत्रापि तदानुगुण्येनाशयस्फोरणं युक्तम् ॥

(१२१) अपरञ्च 'त इह व्याघ्रो वा सिंहो वा'— इत्यादिवाक्यं

भेदाज्ञानेनानर्थं बोधयति - इति यदस्मदाचार्यैः प्रत्यपादि - तद्दूषयन् भवान् यत् 'सति सम्पन्नानां सुषुप्त्यवस्थायामपि न भेदज्ञानम् इत्येव बोधयति' इत्यभाणीत् तत् अज्ञानानर्थत्वप्रतिपादनपरच्छान्दोग्यशाङ्करभाष्यप्रतीपम् । किञ्च त्वदुक्ताशयः 'व्याघ्रो वा सिंहो वा' इति वाक्यात् नैव निर्गलति ॥

(१२२) अद्वैत०– "इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते' इति तु नदीनां तत्तत्समुद्रोद्भवानां समुद्रात्मता, समुद्राणां च महासमुद्रात्मता, एवं परम्परया नदीनामपि महासमुद्रात्मता, यथा घटादीनां कपालाद्यात्मता, कपालादीनां मृदाद्यात्मता, मृदादीनामप्यबाद्यात्मताविधया मूलप्रकृत्यात्मता, तथा तस्या इव सर्वेषां ब्रह्मतयैकविज्ञानेन सर्वविज्ञानमुपपादयत् 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति वाक्ये सर्वमूलकारणात्मना सर्वेषामैक्यप्रतिपादनमेव विवक्षन्, समुद्रात्मताद्वारा नदीनां ब्रह्मतापर्यन्तं वाक्यतात्पर्यमिति ज्ञापयत्, समुद्रात् समुद्रमपियन्ति, समुद्र एव भवतीति मूलकारणादभेदं कार्यस्य बोधयच्च सर्वात्मना नदीसमुद्रयोरभेदपरमेव, न भेदपरम् । 'समुद्रात् समुद्रमपियन्ति, समुद्र एव भवति – इति चानर्थान्तरम् ॥"

**समीक्षा** – अत्र मूलप्रकृतेः घटादिकं प्रति परम्परया कारणत्वं दृष्टान्तीकृत्य जगतो ब्रह्मतादात्म्यसाधनं त्वत्सिद्धान्तं विरुणद्धि ।

अद्वैतमते ब्रह्मणः साक्षादेव घटाद्यारोपाधिष्ठानत्वम् अभ्युपगतम्, न पुनः परम्परया । अन्यथा शुक्तिरजतादिवत् घटादीनां प्रातिभासिकत्वम् आपद्येत ॥

(१२३) अन्यच्च नदीसमुद्रादिदृष्टान्तः प्रकृतविवर्तोपादानत्वे सुतरामननुगुणः । नहि समुद्रो नदीनां विवर्तोपादानभूतः ॥

(१२४) अपरञ्च समुद्रात् समुद्रमपियन्ति समुद्र एव भवति इति वाक्ययोरस्मदाचार्यैः पृथगर्थाभिधानात् भावता अनर्थान्तरत्वकथनम् भवदनवबोधरूपमन्यम् अनर्थमेव ख्यापयति ॥

(१२५) अद्वत०—"उपपादनप्रकारस्तु पर्यवसित एवं वर्णन एवोपपद्यते । अन्यथा समुद्रान्तरस्य महासमुद्ररूपताऽनुपपन्ना स्यात्, इति नदीनां समुद्रेणैकीभूतानामपि नदीत्वमेव न समुद्रत्वमिति विवरणं नोपपद्यते । नहि गङ्गासङ्गमस्थानमपि गङ्गेव; अन्यथा गङ्गास्नानार्थं तावत्पर्यन्तं यात्रा, समुद्रस्नानविधिना तत्स्नानादिकम्, तदुदकेनाचमनादिनिषेधश्चानुपपन्नः स्यात् । समुद्रार्णवादिभेददिग्देशविशेषावच्छिन्नप्रवहणशीला नद्य एव महाकाशइव घटपटाद्यवच्छिन्ना घटाकाशमहाकाशादयः, इत्युपाधिभेदकृत एव भेदो नदीसमुद्रयोः, इत्युपाधिविगमे घटाकाशादीनां महाकाशतेव तत्तदुपाधिभेदविगमे नदीनामेव समुद्रत्वम्, न तु समुद्राणुभ्योऽतिरिक्ता नदीनामणवः ॥"

**समीक्षा**—'समुद्रान्तरस्य महासमुद्ररूपताऽनुपपन्ना स्यात्' इतीष्टमेवापादितम्। किञ्च गङ्गासङ्गमस्थानमपि गङ्गैवेत्यनुक्तोपालम्भः। अस्माभिस्तु तत गङ्गासमुद्रोभयसमावेश एवाङ्गीक्रियते। अत्र एव सङ्गमस्थानमिति व्यवहारः, तत्र स्नाने फलविशेषश्च। अन्यथा समुद्रस्नानफलमात्रं स्यात्। यदि तत् स्थलं केवलं समुद्रः, तत्स्नानफलं च समुद्रस्नानफलानतिरिक्तं तर्हि तावत्पर्यन्ता यात्राऽऽस्तिकानां व्यर्था-सम्पद्येत इति त्वदुद्भाविता दूषणभुजङ्गी त्वामेव ग्रसते। समुद्र-स्नानविधिना तत्स्नानं तदुदकेनाचमननिषेधश्च समुद्रजलबाहुल्यादपि घटते। यथा नीरमिश्रितक्षीरे क्षीराधिक्ये क्षीरकार्दम् नीराधिक्ये चातथात्वं लोके दृश्यते। वस्तुतस्तु सङ्गमस्थले 'सङ्गमस्नानं करिष्ये' इत्येव सङ्कल्पः, न पुनः समुद्रस्नानमिति। अतो वैलक्षण्यं स्फुटम्॥

(१२६) अपरं च नदीसमुद्रयोरुपाधिकृतभेदो न युज्यते। नैसर्गिके अभेदे सत्येव आकाशवत् उपाधिकृतभेदस्य प्रसक्तिः। प्रकृते तु सौररश्मिभिः समुद्रावयवेषु विश्लेषितेषु अवयवी समुद्र एव नश्यति, अतः समुद्रस्य नष्टत्वात् तेनाभेदः नदीभागस्य दुरुपपादः। तथा चाभेदाभावात् भेदस्यौपाधिकत्वं दुर्घटम्॥

(१२७) अद्वैत०—**"एतेन—नहि भिन्नानां नदीजलपरमाणूनां समुद्राणुभिरैक्यं युज्यते। तथा सति हि महाजन-समितौ प्रविष्टानां द्वित्राणां तदैक्यं स्यादिति परास्तम्, नहि महाजना उपाधिभेदतो भिन्नाः, नवा तत्र प्रविष्टा द्वित्राः॥"**

**समीक्षा—** अत्र नदीजलपरमाणूनां समुद्राणुभिः औपाधिकभेदाङ्गीकारे उपाधिसम्बन्धात् पूर्वं स्वाभाविकमैक्यमेव स्यात् । तथा च स्वाभाविकैक्यवता परमाणुना उत्पन्नस्य समुद्रस्य महत् परिमाणं न स्यात् । अवयविगतमहापरिमाणस्य अवयवगतवहुत्वं विनाऽनुपपत्तेः । तथा च महाजनसमितौ प्रविष्टानां द्वित्राणामौपाधिकभेदाभाववत् नदीजलाणूनां समुद्राणुभिरुक्तरीत्या औपाधिकभेदाभावात् नदीनां समुद्रप्रवेशकाले नैक्यप्रसङ्ग इति महाजनसमितिप्रविष्टद्वित्रपुरुषदृष्टान्तः साधु सङ्गच्छते ॥

(१२८) अद्वैत० — **"अप्ययो हि समुद्रे नदीनां तदात्मतैव; कारणावस्थाया एवाप्ययपदार्थत्वात्, परमात्मन एव कारणत्वात् सूर्यरश्मीनामेव कृत्स्नसमुद्रपरमाणुसमूहरूपमेघवृष्टयुदकदिग्देशविशेषाद्यवच्छिन्नप्रवहदप्रवहन्नदीकूपतटाकादिरूपत्वेन तेषां तत्तदुपाधिविलये तदात्मताया एव युक्तत्वाच्च ।।"**

**समीक्षा —** अत्र शुक्तौ रजतस्य अप्यय इति व्यवहाराभावात् विवर्तोपादानत्वेन शुक्त्यविशिष्टे ब्रह्मणि प्रपञ्चस्याप्यय इति जल्पनमुपहासास्पदम् ॥

(१२९) किञ्चात्र 'सूर्यरश्मीनाम्' इत्येतत्पदमनन्वितं नग्नमवतिष्ठते । (एवमेव वहुषु स्थलेषु अनन्वयाद्यसाङ्गत्यं तृणाय मत्वा परी-

क्षकमानी लेखकः सरभसं किमपि लिखन् कृतिमेतां कज्जलयति — इति विभावयन्तु निर्मत्सरा विबुधाः ।।)

(१३०) अद्वैत० — **"अयं ह्यप्ययो जडप्रपञ्चमभिप्रेत्य, चेतनस्य तु 'स्वमपीतो भवती'ति परमात्मनाऽऽत्यन्तिकोऽभेद एव घटाकाश-मठाकाशादीनामिव महाकाशेन । 'स्वमपीतो भवती'त्यत्र स्वशब्देन परमात्मविवक्षाऽपि नाद्वैतविरोधिनी; परमात्मभावस्यैवात्र विवक्षणात् ।।"**

**समीक्षा—**अत्र अभेदे आत्यन्तिकत्वं नाम स्वाभाविकभेदासहिष्णुत्वं वा ? कल्पितभेदासहिष्णुत्वं वा ? नाद्यः, भवता स्वाभाविकभेदानङ्गीकारेण तद्व्यावर्तकविशेषणस्य वैयर्थ्यात् । नापि द्वितीयः, अस्माभिर्मोक्षे भेदस्याङ्गीकारेण तस्य च त्वन्मते कल्पितत्वाङ्गीकारेण च मोक्षे कल्पितभेदस्य दुरपह्नवत्वात् । यदि अप्ययं गच्छतः पुरुषस्य भेदकल्पना नास्तीति तद्विवक्षया कल्पितभेदासहिष्णुत्वमुच्यते इत्यभिधत्से ? तर्हि ब्रह्मज्ञानिनां ब्रह्मभेदकल्पनाभावात् अभेदस्य च इदानीमपि जागरूकत्वात् तेषामिदानीमेव ब्रह्मणाऽऽत्यन्तिकाभेदः स्वीकर्तव्यः स्यात् । उत्तरकालेऽपि भेदकल्पनासहिष्णुत्वं आत्यन्तिकत्वमिति चेत् प्रत्यहं सुषुप्तिकाले त्वदभ्युपगताऽऽत्यन्तिकाभेदरूपाप्ययो जीवस्य न स्यात्, तस्य पुनर्जागरणे भेदकल्पनाया अनपायात् ।।

(१३१) अद्वैत० — "अत एव— **'परेऽव्यये सर्व एकी-**

भवन्ती'ति श्रुतिः । तत्रैकीभाव इति च्विप्रत्ययो ह्यौपाधिकत्वावस्थायां ब्रह्मणाऽत्यन्ताभेदस्याभूतस्य उपाधिविलये तद्भावमभिप्रेत्य । अप्ययो हि 'प्रभवाप्ययौ' इति प्रयोगात् कारणभावापत्तिरेव, न प्रवेशः ॥''

**समीक्षा** — अत्र मोक्षदशायां त्रैकालिकः संविद्रूपोऽभेद एकः, अपरश्च च्विप्रत्ययबोधितः पूर्वमभूतः — इति पदार्थद्वयस्य स्वयमभ्युपगमात् मोक्षे द्वैतापत्तिः — हन्त ! 'विनायकं प्रकुर्वाणो रचयामास वानरम् ॥'

(१३२) किञ्च प्रभवाप्ययौ इत्यत्र प्रभवशब्दस्य कारणसामान्यावाचित्वेन उपादानार्थत्वाभावेन अप्ययशब्देन कारणभावापत्तेरलाभः। किन्तु अप्ययशब्दस्य प्रवेश एवार्थः 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतिसंवादलब्धः ॥

(१३३) अद्वैत० — ''यत्प्रयन्त्यभिसंविशन्ती''त्यादौ द्वितीयैवाप्ययस्थले दृश्यते, न तृतीया, इतिः 'स्वमपीतो भवती'त्यादावपि कारणभावापत्तिरूप एवाप्ययः, इति नात्र 'स्वेनापीतो भवति' इति प्रयोगापत्तिरेकीभावविवक्षायाम् । श्रुतिस्तु न पर्यनुयोज्या, इति द्वितीयाया एव तृतीयार्थताऽपि न विरुद्ध्यते इति 'स्वमपीतो भवति' इत्यादौ स्वशब्देन परमात्मविवक्षाऽपि जीवात्मपरमात्मनोरभेदमाश्रित्याद्वैतमते न विरुद्ध्यते । मुख्यं स्वरूपं हि जीवात्मनोऽपि परमात्मैव ॥''

**समीक्षा –** अत्र 'यत्प्रयन्ति '-श्रुतिसंवादेन 'स्वमपीतो' इत्यत्र द्वितीयोपपत्तिकथनं 'आम्रान् पृष्टः कोविदारानाचष्टे' इत्याभाणकानुधावनमेव। अपीति-शब्दस्य ऐक्यार्थकत्वे 'तृतीया स्यात्' इत्यस्माभिरापाद्यते, भवता च प्रवेशार्थकधातुसमभिव्याहृतद्वितीयान्तवाक्यमुदाहृत्य ऐक्यार्थकशब्दसमभिव्याहृता द्वितीया समर्थ्यते–इति ॥

(१३४) अपरं च – द्वितीयाया तृतीयार्थताऽपि न विरुद्ध्यते इति वदता भवता 'सदेव सोम्येदम्' इत्यत्र इदंशब्दस्य 'अस्य' इत्यस्मदाचार्योक्तव्याख्यानमनुमोद्यते एवेति भृशं हृष्यामः। एतेन 'तत्त्वमसी'-त्यत्रापि तेन त्वमसीत्याद्यर्थः स्वारसिक एवेति सिद्ध्यति ॥

(१३५) अद्वैत० –**"अयमेव न्यायोऽत्र प्रकरणेऽणिमादिशब्दैः परमात्मस्वरूपविवक्षायाम्। नहि जीवेश्वरैक्यवादे जीववाचकशब्दैः परमात्मविवक्षा विरुद्ध्यते कुत्रापि। 'ऐतदात्म्यमिदं सर्वम्' इत्यत्रैतदात्मसम्बन्धीति वा, एतदात्मस्वरूपमिति वा विवक्षापि सर्वस्य ब्रह्मविवर्ततायां न व्याहन्यते॥"**

(१३६) **समीक्षा –** अत्र जीववाचकशब्दस्य अवाच्ये परमात्मनि जघन्यवृत्तिरेवाश्रयणीया। जघन्यवृत्तौ तु जीवेश्वरैक्यवाद इत्युक्तिरव्यावर्त्तिका, जघन्यवृत्त्या वाद्यन्तरेणापि स्वेप्सितसाधनस्य सुशकत्वात्। तथाच केनचित् वैदिकशून्यवादिना ब्रह्मादिपदानां स्ववृत्तिनिर्विशेषत्ववत्त्वरूपशक्यसम्बन्धेन शून्यार्थताकथनेऽप्यविरोधापातः ॥

(१३७) अन्यच्च ब्रह्मविवर्ततामते अस्य प्रपञ्चस्य एतदात्मस्वरूपत्वकथने एतदात्मनोऽपि मिथ्यात्वापत्तिः। ऐतदात्म्यमित्यस्य एतदात्मव्यतिरेकेण किमपि नास्ति - इत्यर्थकथने 'सविशेषण' - इति न्यायेन एतदात्मव्यतिरेकाभावः पर्यवस्यति, स चार्थः ब्रह्मविवर्ततामते प्रपञ्चस्य सदसद्वैलक्षण्यसाधनावसरे सद्वैलक्षण्यसाधनं विरुणद्धि ॥

(१३८) अपरं च एतदात्मसम्बन्धीति - एतदात्मस्वरूपमिति च परस्परव्याहतार्थद्वयस्यापीष्टापत्ति - प्रदर्शनं "अनवस्थादयो दोषाः... अद्वैतिनां ते सुहृदः" इति प्राचामुक्त्यनुरोधेनैव सम्भवेत् ॥

(१३९) किञ्च लोके कोऽपि अभ्रान्तः पुरुषः मुख्यवृत्त्या आरोपितमधिष्ठानसंबन्धित्वेन अधिष्ठानस्वरूपतया वा न व्याहरते ॥

**(१४०) अद्वैत० – इदमेव विवादास्पदम् – परमात्मनो जीवाभेद उपाध्यविवक्षया भवति न वेति। 'सदेवेदम्' इत्युपक्रमानुगुणं विवरणं तु 'ऐतदात्म्यमिदं सर्वम्' इत्यत्र स्वार्थे ण्यप्रत्यय एव स्वरसम्–इति बाधायां तादात्म्येन प्रवृत्तं प्रकरणं न भेदपरं भवितुमर्हति, इति नात्र 'अतत्त्वमसि' इति वाक्ययोजनोत्सूत्रभाष्यानुव्याख्याना सम्भवति, किन्तु तत्त्वमसीत्यभेदे सामानाधिकरण्येनैव ॥"**

**समीक्षा –** अत्र त्वन्मतेऽपि एतावत्पर्यन्तं बाधस्यासञ्जातत्वात् बाधायां तादात्म्येन प्रवृत्तं प्रकरणमिति वक्तुं न साम्प्रतम्। यदि सदेवे-

दमित्युपक्रमः बाधायां सामानाधिकरण्येन स्यात् तदा तदनुरोधेन तत्त्वमसि इत्यपि बाधायां सामानाधिकरण्यमेव स्यात्, तथा च 'अतत्' इति पदच्छेदाकरणेऽपि तत् इत्यस्यैव अतत् इत्यर्थः अस्मदभिप्रेतः त्वयाऽप्यङ्गीकृतः स्यात् ॥

(१४१) अद्वैत० – **"तच्चाद्वैतवादस्यैवानुगुणम्, नतु द्वैतवादस्य । नच जीवब्रह्मभेदोऽत्र प्रतिपिपादयिषितः; श्वेतकेतोः स्वस्य ब्रह्माभेदभ्रमाभावेन तन्निषेधेन तद्भेदप्रतिपादनस्यानाकाङ्क्षितत्वात् । यत्तु – परमात्मातिरिक्तानामात्माभासत्वं तत्र तत्रोच्यते, तत् बद्धाभिप्रायम्, नतु मुक्ताभिप्रायम्; तस्य परमात्मस्वरूपस्य, तदभिन्नस्य वा तदाभासत्वायोगात् ॥"**

**समीक्षा–** अत्र श्वेतकेतूपाख्यानादौ छान्दोग्ये 'महामना' इति श्वेतकेतुविशेषणस्य शाङ्करभाष्ये 'अन्यैः असमं मन्यमानं मनः यस्ये'ति विग्रहपूर्वं व्याख्यानेन ब्रह्मण एवासदृशवस्तुत्वात् स्वस्य तथाभिमानात् श्वेतकेतुर्ब्रह्माभेदभ्रान्तिमान् इति सिद्ध्यति, तादृक्षाया भ्रान्तेर्निवारणस्याऽऽवश्यकतया 'अतत्' इति विच्छिद्य व्याख्यानमेव प्रकरणानुगुणम् ॥

(१४२) किञ्च भवन्मते तत्त्वमसि इति वाक्येन चिद्दृत्याकारकाखण्डार्थबोधनस्यैवानाकाङ्क्षितत्वम्, श्वेतकेतोरचिद्भ्रान्तेरभावात् ॥

(१४३) अन्यच्च परमोपनिषदि "आततत्वाच्च मातृत्वात्

आत्मेति परमो हरिः । आत्माभासास्तदन्ये ये न ह्येतेषां तता गुणाः॥" इत्यत्र "नह्येतेषां तता गुणाः" इति बद्धमुक्तोभयसाधारणहेतुना कथितस्य आत्माभासत्वस्य बद्धमात्रपर्यवसानं सङ्कोचे मानाभावान्नोचितम् ॥

(१४४) अपरञ्च 'परमात्मस्वरूपस्य तदभिन्नस्य वा' इति विकल्पनं स्वरूपाभिन्नशब्दयोः शक्तिग्रहाभावं ख्यापयति ॥

**(१४५) अद्वैत० – "यस्तु – अन्तिमे दृष्टान्तवाक्ये स्तेनपदप्रयोगादन्यथा ज्ञायमानं परमात्मानमात्मानं पश्यन्निति विवरणमेव तस्य युक्तम्, तच्च भेदतात्पर्य एव युज्यते इति – वादः, तत्रात्मनः स्वतः, परतो वा कर्तृत्वानुसन्धातुरेव स्तेनसाम्यस्य विवक्षणात् तदकर्तृत्वानुसन्धातुरेव सत्यवादित्वादिव्यवस्थापनाच्च परमात्माभेदायोग्यात्मस्वरूपबोधने तात्पर्यं नोपपद्यते ॥"**

**समीक्षा –** अत्र कर्तृत्वानुसन्धातुरेव स्तेनसाम्यस्य विवक्षणम् – इति व्याहरणं सत्यवादिनोऽपि सत्यवादित्वानुसन्धानेनैव कर्तृत्वानुसन्धातृत्वलाभात् न युज्यते ॥

(१४६) अद्वैत० – "एतेन–

**'ऐकात्म्यं नाम यदिदं केचिदाहुर्नैपुणम् ।**
**शास्त्रतत्त्वमविज्ञाय तथावादावलम्बनाः ॥**
**कामक्रोधाभिभूतत्वादहंकारवशं गताः ।**

याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ॥
ब्रह्मस्तेना निरानन्दा अपक्वमनसो जनाः ।'

इत्यादिमोक्षधर्मवचनान्यपि – व्याख्यातानि; एतेषां बद्धकिञ्चिज्ज्ञादिजीवस्याहमर्थस्य सर्वज्ञकारणाभेदविज्ञाननिन्दापरत्वेन विगलितसर्वोपाधिजीवत्वेश्वरत्वोपलक्षितसंविन्मात्रतासिद्धान्ताविरोधित्वात् ॥"

**समीक्षा** – अत्र महाभारतवचने चिन्मात्रभेदविशिष्टाभेदोभयसाधरणैकात्म्यशब्दस्य स्वविरोधभयात् विशिष्टामैक्यमात्रपरता वक्त न युक्ता । किञ्च सर्वज्ञोऽहमिति वादिनः केऽपि न सन्ति । अतो विशिष्टाभेदवादिनिन्दापरत्वयोजनं न साम्प्रतम् । परिशेषात् संविन्मात्रवादिनो भवत एव निन्दापरमिति पर्यवस्यति ॥

(१४७) अद्वैत० –

"तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ।
तथाऽपि सूक्ष्मरूपत्वान्न जीवात् परमो हरिः ॥
भेदेन मन्ददृष्टीनां दृश्यते प्रेरकोऽपि सन् ।
वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथा ॥"

इति परमोपनिषदपि क्षेत्रक्षेत्रज्ञविवेकेनाजीवशरीरपरमात्मताज्ञानमोक्षसाधनतापरा । न ह्यन्यथैकविज्ञानेन सर्वविज्ञानोपपत्तिः । नहि प्रधानाविज्ञानेन सर्वेऽप्रधाना लोके विदिता दृश्यन्ते । तच्च

प्राधान्यं यदि सर्वकारणत्वेन, तर्हि तस्यापरिणामिकारणतया विवर्तोपादानरूपतायामद्वैते पर्यवसानम्। निमित्तकारणतायां तु तद् बाधितम्। नहि निमित्तकारणकुलाल-चक्र-दण्डादिविज्ञानेन तत्कार्याणि विज्ञायन्ते। यदि तु प्राधान्यमन्येन प्रकारेण, तर्हि सद्विद्यायां कार्यकारणभावोपदेशस्य वैयर्थ्यम्, ब्रह्मप्राधान्यनियामकान्तारानिरूपणेन तदयोगः, मृत्तिकेत्येव सत्यमिति कारणज्ञानेन सर्वविज्ञानोक्तिविरोधश्च ॥"

**समीक्षा** — अत्र परमोपनिषद्वाक्यानि स्फुटतया भेदबोधकान्यादाय निर्विशङ्कं अद्वैतपरतया अनर्गलकथनं विबुधोपहासास्पदमेव ॥

(१४८) किञ्च क्षेत्रक्षेत्रज्ञविवेकस्य भेदज्ञानरूपतया त्वन्मते मिथ्याज्ञानत्वेन मोक्षसाधनत्वप्रतिपादनमसङ्गतम् ॥

(१४९) अन्यच्च एकविज्ञानेन सर्वविज्ञानोपपत्तिः अद्वैतमते एव नोपपद्यते, सर्वस्य प्रमितत्वे हि सर्वविज्ञानम्, सर्वस्य बाध्यत्वात् सर्वमेव नास्ति-यस्य विज्ञानमुपपन्नं स्यात्। ननु सर्वमिथ्यात्वमेव वस्तुतत्त्वम्, सर्वविज्ञानशब्दस्य सर्वमिथ्यात्वज्ञानमित्येवार्थः। सर्वमिथ्यात्वस्यैव सर्वतत्त्वत्वात् इति चेद्, न, अद्वैतमते प्रपञ्चमिथ्यात्वस्यापि मिथ्यात्वात्। अबाध्यमेव हि तत्त्वं भवितुमर्हति। प्रकृते मिथ्यात्वं बाधितमेवेति भवताऽभ्युपगतत्वात् कथं तत् तत्त्वं भवेत् ?

(१५०) अपरं च प्रधानज्ञानेनाप्रधानं ज्ञातमिति न वयमाचक्ष्महे; किन्तु ज्ञातकल्पमित्येव । अप्रधानज्ञानफलस्य प्रधानज्ञानेन जायमानत्वात् । मृत्तिकेत्येव सत्यमिति कारणज्ञानेन सर्वविज्ञानोक्तिरिति नैवाभ्युपगम्यते । अर्थशास्त्रे इतिशब्दप्रयोगः शब्दानुपूर्वीमेव बोधयति इति नियमात् मृत्तिकेत्यादिसंस्कृतशब्दज्ञानेन अप्रधानभूताः प्राकृतभाषाशब्दा ज्ञातकल्पा भवन्ति इत्यर्थस्यैवोपपन्नत्वात् । अन्यथा इतिशब्दस्य वैयर्थ्यं स्यात् ॥

(१५१) किञ्च अद्वैते मृत्तिकाया अपि मिथ्यात्वेन तत्र यादृशं पारिभाषिकं सत्यत्वमभ्युपयन्ति तादृशमेव सत्यत्वम् उपमेये ब्रह्मण्यपि लभ्येत ॥

(१५२) अद्वैत० – **"कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः" इत्यत्रेश्वरस्रष्टृत्ववर्णनेनैव सत्यत्वे सिद्धे याथातथ्यत इति पदं प्रपञ्चस्य सृष्टस्य यथातथाभावं यावद्व्यवहारं सत्त्वमेव बोधयति, न पारमार्थिकं सत्त्वम् ; यावत्कारणसत्त्वं कार्यसत्ताबोधन एव तत्तात्पर्यात् ॥"**

**समीक्षा –** अत्रेश्वरस्रष्टृत्ववर्णनेन सिध्यत् सत्यत्वं पारमार्थिकम्, उत व्यावहारिकम्? आद्ये स्वपसिद्धान्तता गले लग्ना, द्वितीये 'याथातथ्यतः' इत्यनेनापि व्यावहारिकसत्यत्वबोधने(तस्य पदस्य) वैयर्थ्यंतादवस्थ्यम् । वस्तुतस्तु स्रष्टृत्ववर्णनेन अर्थात् सत्यत्वस्य सिध्य-

मानत्वेऽपि कण्ठतः सत्यत्वबुबोधयिषया 'याथातथ्य'पदं सार्थकमेवेति न तिरोहितम् ॥

(१५३) अन्यच्च अनारोपितसत्यत्वबोधक-याथातथ्यपदस्य स्वप्रौढिम्ना मिथ्यात्वापर्यायव्यावहारिकसत्यत्वपरतया व्याख्यानं नास्तिकानां 'सत्यं ज्ञानमनन्तम्' इत्यत्रापि तादृशव्याख्यानावसरप्रसञ्जकत्वाद्धेयमेव ॥

(१५४) यच्च यावत्कारणसत्त्वं कार्यसत्ता-बोधनप्रतिज्ञानं तत् कारणस्य ब्रह्मणः जगद्वत् कादाचित्कत्वम्, यद्वा कार्यस्य जगतः सदातनत्वं बोधयतीति हन्त! महद् अत्याहितमापतितम् ॥

**(१५५) अद्वैत० —"कारणत्वं तु ब्रह्मणो मायोपहितस्य यावन्मायासत्त्वमेव, इति मायाविनाशे तत्प्रयुक्त-तत्कार्यविनाशेन मायाया इव तत्कार्याणामपि मिथ्यात्वसिद्धान्त एव पर्यवसानात् विश्वसत्यत्वपराणां सर्वेषां वचनानां न कोऽपि विरोधः ॥"**

**समीक्षा—** अत्र मायोपहितस्य मिथ्याभूतस्य कारणत्वं चेत् 'सदेव' इत्यत्र कारणस्य 'सत्'—शब्देन निर्देशो न स्यात् ॥

(१५६) किञ्च कारणज्ञानेन सर्वविज्ञानं कारणव्यतिरेकेणेतराभावमभिप्रेत्य कथ्यते भवता । तत्र तत्कारणस्यापि मिथ्यात्वे 'कारण-व्यतिरेकेणे'ति कथनमपार्थकमेव, उभयोरपि तव मिथ्यात्वात् ॥

(१५७) अद्वैत० –

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत् कामहैतुकम् ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥"

इति भगवद्गीता तु नाद्वैतवादनिन्दापरा, किन्तु सौगतमत-निन्दापरेति गीतातात्पर्यचन्द्रिका वदति । तत्राद्वैतमते साधिष्ठान-कत्वं जगतः स्वीक्रियते, इति यावत्तत्प्रतीति नाप्रतिष्ठितत्वम्, न वाऽनीश्वरत्वम् । तत्रजगतोऽसत्यत्वं स्वरूपतो बाधेन यद्यपि स्वीक्रियते ; तथाऽपि ईश्वरस्य स्वरूपतोऽसत्यत्वं न स्वीक्रियते । अत एव 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्'इति जगतोऽनीश्व-रत्वविशेषणम् । सोपाधिकमसत्यत्वं त्वीश्वरस्य नान्यद् जगद-सत्यत्वात्, उपाधिबाध्यत्वप्रयुक्तत्वस्यौपाधिकस्यैव बाध्यत्व-स्याद्वैतमते ईश्वरे स्वीकारात् ॥"

**समीक्षा –** अत्राप्रतिष्ठत्वादिसमुच्चितस्य असत्यत्वस्य निन्द्यत्वे असत्यत्वस्य कीर्तनं व्यर्थं स्यात् । भवदुक्तरीत्या विशिष्टनिन्दाया विशेषणीभूताप्रतिष्ठत्वानीश्वरत्वनिन्दायामेव पर्यवसानाभ्युपगमात् ॥

(१५८) किञ्च बौद्धैरपि सप्रतिष्ठत्वमभ्युपेयत एवेति 'समस्त-वासनाधारमभ्युपगच्छन् अक्षरमात्मानमभ्युपैति'इति शाङ्करभाष्यभामत्या

'द्वे सत्त्वे समुपाश्रित्य बौद्धानां धर्मदेशना ।' इति बौद्धकारिकया च स्फुटं ज्ञायते । यदि भवता तदभ्युपगताधिष्ठानस्याप्रामाणिकत्वाद् अद्वैताभ्युपगतस्य तस्य प्रामाणिकत्वाच्च बौद्धसमय एवाप्रतिष्ठत्वं जगतः समापतति इति तन्निन्दैवेयमिति आगृह्यते चेत् ? भवदभ्युपगतस्यापि तदभ्युपगताद् विशेषस्याङ्गीकारे निर्विशेषत्वं भज्येत । अनङ्गीकारे च भगवत्कृतनिन्दास्पदत्वमेव अद्वैतसिद्धान्तस्य । एतेनानीश्वरत्वादिकमपि व्याख्यातं वेदितव्यम् । अनीश्वरत्वमपि अद्वैते सौगतवदेव सङ्घाघटीति । सौगतैरपि यत्किञ्चिन्निर्विशेषतत्त्वस्य भवद्वदङ्गीकारात् विशिष्टतत्त्वस्य च उभाभ्यामप्यनङ्गीकारात् सौगतशाङ्क्रेयत्वमेव अद्वैतिनाम् ॥

(१५९) **अद्वैत० – समीक्षा–** **"अन्ततः सर्वविद्योपरमे ब्रह्मभावो मूलजीवस्यैव मुक्तिः"** इति यदवोचि तत् छान्दोग्य-भगवद्गीतयोः शाङ्करभाष्येण न संवदते - 'मूढा जन्मनि जन्मनि' इत्यस्य व्याख्याप्रसङ्गे तथा 'व्याघ्रो वा सिंहो वा' इत्यादिव्याख्यायां "युगसहस्रकोट्यन्तरिताऽपि जन्तोः वा पुराभाविता वासना सा न नश्यतीत्यर्थः-" इति स्पष्टं शाङ्करभाष्ये समुद्घोषणात् ॥

११३ पृष्ठात्मकोपोद्घाते द्वाविंशतिपृष्ठात्मकस्यांशस्य समीक्षां विधाय सम्प्रति न्यायमुधापरीक्षासमीक्षाव्यग्रतया तावदुपरम्यते । पुनश्च समीक्षाद्वितीयभागेऽवशिष्ट उपोद्घातांशः समीक्षिष्यते ॥

श्रीरस्तु

# न्यायसुधापरीक्षासमीक्षा

—※—

"आचार्यः पवनोऽस्माकमाचार्यानी च भारती ।
देवो नारायणः श्रीशो देवी मङ्गलदेवता ॥"
पृथिव्यां जयतीर्थार्यवाणी प्रौढिपुरस्कृता ।
अन्तरा गुरुनिर्द्देशं दुर्बोधा विदुषामपि ॥
प्रसभं रभसात् तेषां परीक्षेत कृतिं यदि ।
भवेत् स पण्डितंमन्यः खण्ड्यवाग् हासभाजनम्॥
शास्त्राब्धि सम्यगुन्मथ्य विबुधैरुद्धृतां सुधाम् ।
जिघत्सन् चक्रिकृत्तोऽसौ स्वर्भानुरिव भासते ॥
श्रीमन्न्यायसुधायास्तु विषयांश्चर्चितान् पुरा ।
दुराग्रहपिनद्धाक्षः पर्यैक्षत विचक्षणः ॥
पुनरुक्तिपरैः शब्दैरनर्थैः शब्दडम्बरैः ।
व्याघातादिहतैः शश्वत् वाचालत्वं प्रदर्शयन् ॥
'कृते च प्रतिकर्तव्यं' इति वाक्याद्वयं पुनः ।
परीक्षिष्यामहे शब्दैर्मितैः प्रेक्षावतां मुदे ॥

(१६०) अद्वैत० – "तत्र 'अथातो धर्मजिज्ञासे'ति धर्ममीमांसातः पृथग् ब्रह्ममीमांसायाः सूत्रणात् कर्म-ब्रह्म-काण्ड-योर्भिन्नविषयत्वावगमात् 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति

**कर्मणां ब्रह्मज्ञानोपकारकत्वमात्रबोधनाच्च कर्मकाण्डानामपि विष्णुपरत्वेन ब्रह्मपरता न विकल्पसहा ॥"**

**समीक्षा** – अत्र 'सर्वे वेदा यत्पदमामनन्ति', 'सर्वैश्च वेदैरहमेव वेद्यः' इति श्रुतिगीताबलेन सर्वासां श्रुतीनां महातात्पर्यमुख्यवृत्तिभ्यां विष्णुपरत्वं मुख्यवृत्त्यवान्तरतात्पर्याभ्यां तत्तत्कर्मादिपरत्वमुपपादयतां द्वैतिनां सिद्धान्ते कर्मब्रह्मणोरैक्याभावात् अन्यतरोपमर्दाभावाच्च धर्मब्रह्ममीमांसयोः पृथक् सूत्रणं कर्मणां ब्रह्मज्ञानोपकारकत्वञ्च न कथञ्चिदपि व्याहन्यते– इति स्थितिः । अत्र कार्त्स्न्येन श्रुतीनां भगवत्परतामनङ्गीकुर्वाणानामद्वैतिनामेव मूर्धनि पूर्वोक्तश्रुतिस्मृतिविरोधदण्डः समापतति । 'सुधायां' समन्वयाध्याये अस्यैवार्थस्य सम्यक् प्रपञ्चनेऽपि सुधाक्षेपबद्धपरिकरस्यास्य मनीषिपुङ्गवस्य तत् तिरोधानं "नैष स्थाणोरपराधः यदेनमन्धो न पश्यति" इति भणितिं स्मारयति ॥

"शारीरकमीमांसाख्याया अद्वैतमतेऽनुपपत्तिशङ्का, तत्परिहारश्च ।

(१६१) अद्वैत० – **तथाहि – किमत्र जीवस्य शारीरकपदार्थत्वं निषिद्ध्यते; उत शारीरकस्यापि तस्य ब्रह्मत्वम् । आद्ये नाद्वैतमतेऽपि जीवस्य जीवरूपेण जिज्ञास्यता, किन्तु ब्रह्मरूपेणैव, इति ततो जीवपरतया प्रतीयमानस्याप्यात्मनो वाक्यान्वयाधिकरणे जीवत्वोपलक्षित-ब्रह्म-परत्व-व्यवस्थापनात् तत्त्वमसीत्यादौ व्यक्तं जीवब्रह्मभेदबोधनाच्च जीवस्वरूपजिज्ञासाऽपि ब्रह्म-**

**जिज्ञासैव । ईश्वरोऽपि शारीरपदार्थो नात्र विशिष्टः, किन्तु ईश्वरत्वोपलक्षितसंविन्मात्रम् , इति हि ब्रह्ममीमांसा मीमांसते, इत्युत्तरत्र विशदीभविष्यति । ब्रह्मसूत्रपदेन वेदः तदर्थो वा विवक्ष्यते इति वन्दती न्यायसुधाऽपि वेदार्थविचारमेवात्र प्रस्तौति । वेदार्थश्च जीवः प्रत्यक्षादिप्रमाणानवगतः प्रत्यगात्मा, इत्यविद्योपहितस्वरूपो ब्रह्मपदार्थोऽत्र जिज्ञास्यते इति सिद्धान्ताद् वेदान्तमात्रावगम्यजीवस्वरूपमपि ब्रह्मैव, इति ब्रह्मसूत्रपदमव्याहतं शारीरकजिज्ञासायां प्रस्तुतायामपि ।।''**

**समीक्षा –** अत्र 'अथातो ब्रह्मजिज्ञासा'इति सूत्रस्य जीवस्य ब्रह्मरूपेण जिज्ञासा–इत्यद्वैत्यभिमतमर्थं सुधायाम् अनूद्य 'न, असम्भवात्, नहि जन्मादिसूत्राण्यभेदपराणि, प्रत्युत तन्निरासपराणीति वक्ष्यते'। अतः शारीरकः परमात्मैव । तस्य सकलगुणपूर्णत्वादिमीमांसैव शारीरकमीमांसा तथाचोक्तं पुराणे – 'सर्वदोषविहीनत्वं गुणैः सर्वैरुदीर्णता । अभेदः सर्वरूपेषु जीवभेदः सदैव हि ।। विष्णोरुक्तानि सूत्रेषु सर्ववेदेड्यता तथा । तारतम्यं च मुक्तानां विमुक्तिविषया तथा ।। तस्मादेतद्विरुद्धं यत् मोहाय तदुदाहृतम् ।। तस्माद् ये ये गुणा विष्णोः ग्राह्यास्ते सर्व एव तु ।।' इत्यन्तेन निरासात् पुनस्तस्यैव निरस्तस्यार्थस्य युक्तिविशेषाद्युल्लेखनं विना निरूपणमनास्थेयमेव ।।

(१६२) किञ्च तव प्रमाणत्वेन सम्प्रतिपन्न शिवरहस्यग्रन्थे 'व्यासोपदिष्टसूत्राणां द्वैतवाक्यात्मनां शिवे' इति ग्रन्थेन, एवमेव शङ्कर-

विजयादिष्वपि यत्र तत्र समुल्लेखात् सूत्राणां द्वैतपरताऽयत्नसिद्धा ॥

(१६३) अन्यच्च – 'ननु सूत्रकारः न क्वापि जीवब्रह्मणोरैक्यं मुखतो वक्ति' इत्याशङ्कायां शाङ्करभाष्ये 'प्रतिपादयन्तु शास्त्रार्थमात्मैक्यं दर्शयति-'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इत्यादिना, अत्राऽऽदिपदेन 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इत्यस्य ग्रहणम्' इति सन्याख्ये ग्रन्थेआत्मैकत्वप्रतिपादकतया सूत्रद्वयस्यैव समुल्लेखात्— इतरसूत्राणामद्वैतपरत्ववर्णनं स्वोपजीव्याचार्यसिद्धान्तविरुद्धम् ॥

(१६४) अन्यच्च मधुसूदनसरस्वतीभिः सिद्धान्तबिन्दौ—"न स्तौम्यहं व्यासमशेषमर्थं सम्यङ् न सूत्रैरपि यो बबन्ध । विनापि तैः सङ्ग्रथिताखिलार्थं तं शङ्करं नौमि सुरेश्वरञ्च ॥" इत्यनेनाद्वैतं सूत्रेषु न निबद्धम्, उत्सूत्रतयैव शङ्कराचार्यादिभिरद्वैतं प्रत्यपादि – इति कथितत्वेन तद्विरोधो दुरुद्धरस्तव । अन्यथाऽस्य पद्यस्याविद्यमानगुणवर्णनपरतया वैयर्थ्यम् ॥

(१६५) शारीरकशब्दस्य जीवन्वेश्वरत्वोपलक्षितार्थकत्वे उपलक्षितयोः त्वया ऐक्याङ्गीकारेण पुराणवचने 'शारीरौ तावुभौ' इति भेदव्याप्यद्वित्वविशिष्टतया कीर्तनं नान्वीयात् । अतः शारीरशब्दः जीवत्वेश्वरत्वविशिष्टार्थक एव । तथा च शारीरकमीमांसाशब्दः उपलक्षितैक्यमीमांसापरत्वेनाङ्गीकृतसूत्रेषु न घटत एव ॥

(१६६) अपरञ्च– उपोद्घातस्य ४१ तमे पृष्ठे "जीवस्वरूपम् ईश्वरस्वरूपं वा प्रत्यक्षानुमानाभ्यामिवागमेनाप्यवगम्यते।" इत्यभिधायात्र 'वेदार्थश्च जीवः प्रत्यक्षप्रमाणानवगतः' इत्याख्यन् भवान् परस्परविरोधम् अद्वैतसाधनबद्धकच्छतया नैव गणयति व्याघातसखः। ननु विशिष्टरूपेण प्रत्यक्षत्वं शुद्धरूपाभिप्रायेण च वेदार्थत्वम् इति कथनं तु ३८ तमे पृष्ठे उपोद्घाते "शुद्धस्य शब्देन बोधनस्यैवाभावात्" इति वाक्यपरिपन्थ्येवेति "वृश्चिकभयात् पलायितस्याऽऽशीविषमुखे निपातः" शोच्य एव ॥

(१६७) अद्वैत० – "तत्र ब्रह्मपदेन सकलगुणपूर्णो विष्णुः, ब्रह्मविष्णुशिवात्मको विवक्ष्यत इति न विप्रतिपन्नम्; तथाऽपि विष्णुस्वरूपस्यैव तत्र प्राधान्यात् स एव विवक्षितो वा; उताविशेषेण ब्रह्मस्वरूपमात्रम्; विष्णुपुराणे परमात्मनो ब्रह्मविष्णुशिवात्मकस्याम्नानात् इत्यत्रैव विप्रतिपत्तिः। अत एव भागवत्पादीयं भाष्यम् – 'द्विरूपं हि ब्रह्मावगम्यते वेदान्तशास्त्रेष्विति। तत्र सगुणं संकर्षकाण्डप्रस्तुतं तदुपासनद्वारा निर्विशेषस्य च ब्रह्मणो जिज्ञासेति भगवत्पादीयो राद्धान्तः; अन्यथा– 'सविष्णुराह हि तद् ब्रह्मेत्याचक्षते' इत्युपसंहरता सङ्कर्षकाण्डेनैव विष्णुरूपब्रह्मजिज्ञासाया गतत्वात्–'अथातो ब्रह्मजिज्ञासा' इति विष्णुपदं विहाय ब्रह्मपदेन सामान्येन ब्रह्मजिज्ञासायाः पृथक् प्रतिज्ञा नोपपद्येत, नवा जिज्ञासाधिकरणे जीवपूर्वपक्षताया उत्थितिः। 'अथातो ब्रह्मजिज्ञासे'त्यत्र पूर्वपक्षो

जिज्ञासाया एवोपपत्तिमाश्रित्य । तत्र यदि ब्रह्मशब्दस्य जीवो नार्थः, कथं तत्र पूर्वपक्षो नोत्पन्नेत्र (?) हन्यते ? नहि प्रत्यक्षं जीवस्वरूपं वेदान्तगम्यतया पूर्वपक्षविषयः; अन्यथा वेदान्तानामनुवादकत्वेन, असन्दिग्धत्वेन चाविचारणीयत्वात् , इति अद्वैत्यभिमतं प्रत्यग्ब्रह्मैक्यमभिप्रेत्य हि तत्र पूर्वपक्षः । व्यक्तीकरिष्यते चेदमुपरिष्टात् । तथा च जीवस्वरूपमप्यात्मत्वाद् यदि ब्रह्मशब्दार्थः, आत्मन एव ब्रह्मत्वात्, तर्हि ब्रह्मसूत्रपदे ब्रह्मपदं शारीरकपदार्थजीवात्मस्वरूपाभिप्रायमिति वक्तव्यम् । जिज्ञास्यत्वं तु जीवस्याज्ञातेन रूपेणैव भगवत्पादाभिमतम् , इति न ब्रह्मसूत्रपदविरोधात् जीवो नात्र शारीरकपदार्थः ।।''

समीक्षा – अत्र विष्णुपुराणस्याशयं भवान् न वेद । ब्रह्म विष्णुशिवानामभिन्नत्वे ब्रह्मशिवाभ्यामवध्यत्ववरदानेन परित्रातानां दैत्यानां तत्रैव विष्णुपुराणे विष्णुकर्तृकहन्तृत्वाख्यानं नोपपद्येत । पारमार्थिकैक्येऽपि औपाधिकभेदबलात् सर्वमिदं घटयितुमीहसे यदि तर्हि चैत्रमैत्रादीनामपि मूर्त्तित्रितयस्येव पारमार्थिकाभेदसत्त्वेन त्रिमूर्तिर्भगवानिति पौराणकथनायोगः । अतः 'ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः' इति प्रमाणानुरोधेन सृष्ट्यर्थं ब्रह्मान्तर्यामितया संहारार्थं शिवान्तर्यामितया पालनार्थं च स्वरूपेण – इति त्रीणि रूपाणि ब्रह्मविष्णुशिवशब्दितानि सरस्वतीपार्वतीपति-ब्रह्मशिवाभ्याम् अतिरिक्तानि एव व्यक्तीचकार भगवान् नारायणः – इति विष्णुपुराणस्याशयः बहुतरप्रमाणसंवादितः ।

(१६८) अन्यच्च–ब्रह्मणः सविशेषनिर्विशेषाख्यरूपद्वयमप्रामाणिकम्, निर्विशेषस्य शशविषाणसमत्वात्। भवताऽपि पूर्वोद्धृतभावत्कवाक्ये (शुद्धब्रह्मणः शब्देनाबोधनादित्यनेनाप्रामाणिकतया) अङ्गीकारात्। अतः सौत्रः श्रौतो वा ब्रह्मशब्दः सविशेषमेव ब्रह्म बोधयति, अत एव संकर्षणकाण्डे 'स विष्णुराह हि, तं ब्रह्मेत्याचक्षते'–इत्यनेन विष्णोरेव ब्रह्मत्वं समर्थितम्, 'अथातो ब्रह्मजिज्ञासा'–इत्यत्र तस्यैव विष्णोः ब्रह्मशब्देन प्रस्तुतस्य समुपादानम् ॥

(१६९) किञ्च 'सर्वस्य शब्दजातस्य यत्प्रमाणश्च निर्णयः'–इति स्कान्दवचनम्। सर्वैः शब्दसमूहैः क्रियमाणो निर्णयः ब्रह्मसूत्रोपजीवकः इत्येतस्यार्थः । तथा च संकर्षणकाण्डादीनामपि एतद्वचनानुरोधेन ब्रह्मसूत्रव्याख्यानरूपत्वात् तैः व्याख्येयस्य ब्रह्मसूत्रस्य गतार्थता वक्तुं न युक्ता ॥

(१७०) अपरं च निर्विशेषस्य जिज्ञासैव न सम्भवति, इदमित्थम् इति ज्ञानं हि जिज्ञासायाः प्रयोजनम्। प्रकृते निर्विशेषे इदमित्थम् इति सप्रकारकविचारजन्यज्ञानविषयत्वासंभवात्। निर्विशेषं ज्ञायते चेत् विचारे सति निष्प्रकारकमेव ज्ञायेत। अतो निर्विशेषजिज्ञासा निष्प्रयोजनैव ॥

(१७१) **समीक्षा–** अथातो ब्रह्मजिज्ञासा इत्यत्र पूर्वपक्षः जीवजिज्ञासाया एवोपपत्तिमाश्रित्य इत्यस्माकमसिद्धम्, अस्माभिः विषयाभावेन श्रुत्युक्त-जिज्ञासैव पदं न लभते इति सूत्रनिरसनीयत्वेन पूर्वपक्षो-

स्थापनात् । "असन्दिग्धस्याजिज्ञास्यत्वेन पूर्वपक्षे सन्दिग्धत्वेन जिज्ञास्यत्वं च 'भामती' वर्णयति – इत्यव्यवहितोत्तरपृष्ठे कथयता भवताऽपि अजिज्ञास्यत्वपूर्वपक्षस्यैवोररीकृतत्वेन–अत्र "जीवजिज्ञासायाः उपपत्तिमाश्रित्य पूर्वपक्षः" इति कथनं निरङ्कुशं लपनमेव प्रत्याचष्टे ॥

(१७२) "परमते जीवस्याजिज्ञास्यत्वम्, ब्रह्मणो जिज्ञास्यत्वमिति किं केन सङ्गतम्?" इति यद् भवान् जल्पति तत्र श्रुत्युक्ता जिज्ञासा न कर्तव्या, विषयाद्यभावात् इति पूर्वपक्षः, विषयादिसत्त्वात् सा कर्तव्या–इति किलास्मन्मतीयाधिकरणोपक्रमः । एवं गतेऽपि वस्तुनि असाङ्गत्योद्भावनमेवासङ्गतम् ॥

(१७३) अद्वैत० – **"वस्तुतस्तु– 'शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वर एव ।' इति वचनमपि नियम्यम्, नियामकमुभयं च शारीरपदार्थं गमयत् तत्तदुपाधिद्वाराऽधिष्ठेयं विशिष्टजीवम्, सर्वाधिष्ठानं संविन्मात्रं च शारीरकपदेन पूर्वोत्तरपक्षविधया समादाय शारीरकस्यैव विषयतामत्र गमयति । ईश्वरपदमपि – 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुत्यवगत-स्वयंप्रकाश-सर्वावभासक-सर्वाधिष्ठानस्य, तत एव सर्वनियामकस्य चोपस्थापकं नाद्वैतसिद्धान्तविरोधि । ईश्वरोऽपि हि विशिष्टरूपेण वेदान्तेन प्रत्यक्षेण जीव इव ज्ञात एव, परंतु न संविन्मात्रनिर्विशेषरूपेण निर्णीतः, इति शारीरकमीमांसात्वमीश्वरजिज्ञासाया अप्यद्वैतसिद्धान्त एव स्वरसम् । ईश्वरस्यापि ब्रह्म-**

**रूपत्वं तेनैव रूपेण, न तु विशिष्टेन रूपेण, इति ब्रह्मपद-स्वारस्यमद्वैतसिद्धान्त एव । सर्वथा तु ब्रह्मसूत्रनाममात्रेणाद्वैत-सिद्धान्तविरोधोपस्थापनं न्यायसुधाया निरालम्बम् ।।"**

(१७४) **समीक्षा –** 'अत्र अधिष्ठेयं विशिष्टजीवं सर्वाधिष्ठानं सविन्मात्रं च पूर्वोत्तरपक्षविधया समादाय' - इति लपता भवता "विशिष्टजीवपूर्वपक्षः संविन्मात्रसिद्धान्त" इति पूर्वोत्तरपक्षयोर्वैरूप्य-मङ्गीकृतमेव ॥

(१७५) किञ्च ईश्वरपदस्य सर्वाधिष्ठानं तत एव सर्वनियाम-कम्-इति व्याख्यानमलौकिकम् । नियामकत्वं हि नियम्यस्य व्यापारेषु प्रेरणम्–तच्चारोपाधिष्ठाने संविन्मात्रे कथं वा घटताम् ? नहि शुक्तिका-शकलं रजतं व्यापारेषु प्रेरयति ॥

(१७६) अन्यच्च–'ईश्वरस्य न संविन्मात्रनिर्विशेषरूपेण निर्णी-तत्वम्' - इत्यस्य कोऽर्थः ? निर्णयस्यानर्हता, उत जिज्ञासावधि अनिर्णी-तत्वं वा ? आद्ये तज्जिज्ञासा वन्ध्यैव । द्वितीये– विशिष्टरूपस्यापि बहुविधविप्रतिपत्तिविषयत्वेन जिज्ञासावधि अनिर्णीतत्वं सममेव ॥

(१७७) अपरञ्च – ईश्वरस्य ब्रह्मरूपत्वं 'तेनैव रूपेण' इति भणतो भवतः ब्रह्मपदस्य को वाऽर्थो विवक्षितः ? निर्विशेषे तस्मिन् बृहत्त्वाख्यब्रह्मपदप्रवृत्तिनिमित्तविरहेण ब्रह्मपदस्वारस्यं कथम् आस्वाद-यति भवान् ? ॥

**(१७८) अद्वैत० – तदयं निष्कर्षः – तत्तद्गुणविशिष्ट-जीवेश्वरयोरविवक्षितोपाधिसंविन्मात्ररूपेण जिज्ञासैवात्र शारीरक-मीमांसा, ब्रह्ममीमांसा वा, न तु सकलगुणपूर्णत्वादिविशिष्टेश्वर-जिज्ञासा। यदि चैकान्ततः सर्वगुणपूर्णमेव ब्रह्म, तर्हि तत्स्व-रूपजिज्ञासयैव पर्याप्तम्, ननु तदीयसकलगुणपूर्णत्वमीमांसा किञ्चित्करी ॥''**

**समीक्षा –** इत्याम्रेडनं कुर्वाणो भवान् केवलस्वरूपजिज्ञा-साया असम्भवकथनेनैव दत्तोत्तरः। आवैधेयविबुधं सर्वैरपि वस्तुनो हि किञ्चित्प्रकारेणैव विचारः प्रस्तूयते ॥

अन्यच्च गुणपूर्णत्वेन जिज्ञासैव तत्र माहात्म्यज्ञानद्वारा भक्त्यु-त्पादिका, सा च भक्तिः उपासनाद्वारा साक्षात्कारं मोक्षं च जन-यति इति तन्मीमांसाया अकिञ्चित्करत्वकथनमेव अकिञ्चित्करम् ॥

**(१७९) अद्वैत०–''न चात्र सूत्रम्–अथातो गुणपूर्णब्रह्म-जिज्ञासेति, इति केवलमत्र ब्रह्मपदप्रयोगाद् निर्विशेषं ब्रह्मैव जिज्ञास्यमिति प्रतीयते, अथवा सविशेषनिर्विशेषोभयजिज्ञासा ॥''**

**समीक्षा** – अत्र ओंकारस्य गुणपूर्णार्थकत्वेन पुनर्गुणपूर्णेति-शब्दोऽनपेक्षित एव ॥

(१८०) किञ्च निर्विशेषपदाभावात् निर्विशेषस्य ब्रह्मत्व-जिज्ञा-

स्यत्वाऽसंभवाच्च निर्विशेषं ब्रह्मैव जिज्ञास्यमिति ते मानोरथिकमेवेदम्, न वस्तुसत् ॥

(१८१) **अद्वैत० – "सर्वदोषविहीनत्वोक्तिरप्यत एव व्याख्याता । तेन हि सर्वजगत्कारणत्वादेरविद्योपाधिप्रयुक्तत्वेऽप्युपाधेः प्रतिबिम्बपक्षपातित्वाद् उपाध्यवच्छिन्नपक्षपातित्वाद्वा नैकान्ततः ब्रह्मणः सविशेषत्वमित्येवासीयते ।।"**

**समीक्षा –** अत्र सर्वदोषविहीनत्वोक्तिः न निर्विशेषपर्यवसायिनी, "सर्वदोषविहीनत्वं गुणैः सर्वैरुदीर्णता" इति पौराणे वचने सर्वगुणोदीर्णत्वशब्दसमभिव्याहारात् ॥

(१८२) किञ्च जगत्कारणत्वादेरविद्योपाधिप्रयुक्तत्वोदीरणं – 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्वेताश्वतरवाक्यविरुद्धत्वाद् हेयमेव ॥

(१८३) **अद्वैत० – "निर्दोषत्वं हि ब्रह्मणः कं वा दोषं तत्र प्रसक्तमपेक्ष्य ? यदि न कोऽपि तत्र प्रसज्यते, तर्हि कथं तत्र नाप्रसक्तप्रतिषेधः ? उपाधिसम्बन्धप्रयुक्ता गुणा एव दोषा इत्यभिप्रेत्य यदि निरस्यन्ते, तर्ह्यध्यारोपापवादन्यायेन तत्र प्रसक्तानां गुणानामेव निषेधः, इति निर्गुणपरतायामेव सर्वदोषविहीनत्वादिवचनानां तात्पर्यम् ।।"**

**समीक्षा –** जीवे सर्वत्रानुभूयमानं पारतन्त्र्यादिकं चेतनत्वेन

ब्रह्मण्यपि प्रसज्यमानं निर्दोषपदेन प्रतिषिध्यते । अन्यथा 'एकमेवाद्वितीयम्' इत्यत्राद्वैतमते "वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः । वृक्षान्तरात् सजातीयात् विजातीयाच्छिलादितः ॥" इत्याद्युक्तविधया लोके दृष्टस्य केवलं वस्तुसाम्येन ब्रह्मणि प्रसक्तस्य भेदत्रयस्य प्रतिषेधो नैव युज्येत ॥

(१८४) अद्वैत०–"**दोषत्वं हि गुणानामपि** जीवगतानां **बन्धकत्वप्रयुक्तमेव, नतु स्वरूपप्रयुक्तम् । नहि कोऽपि सर्वदृष्ट्या गुण एव, दोष एव वा । आनियतस्वभावत्वं हि गुणानाम्, दोषाणां च जीवेषु।ब्रह्मणि तु सर्वे आरोपिता अपि यावत्तत्सत्त्वं विचित्रकार्यकारित्वाद् ब्रह्मणो गुणा एव । तथा च जीव इव बन्धका अपि वस्तुगत्या दोषा एव सर्वे धर्माः क्वचिद् निर्गुणपदेन ब्रह्मणि निषेध्यत्वेन बोध्यन्त इति वक्तव्यम् ॥**"

**समीक्षा–** अत्र गुणपदेन ज्ञानानन्दादयः यदि विवक्ष्यन्ते तर्हि तेषां बन्धकत्वाभावात् दोषत्वोक्तिर्न युज्यते । यदि सत्त्वरजस्तमोगुणा अभिप्रेताः तर्हि ब्रह्मणि उत्कर्षप्रयोजकधर्माणामेव प्रकृते **गुणपूर्णपदेन** प्रस्तुतत्वात् तदभावकथनपूर्वकं निर्विशेषब्रह्मप्रतिपादनार्थं प्रवृत्तेन भवता गुणत्रयस्य दोषत्वाख्यानपूर्वकं तद्राहित्यस्थापनं सिद्धसाधनत्वात् असङ्गतम् ॥

(१८५) किञ्च न कोऽपि सर्वदृष्ट्या गुण एवेति प्रतिज्ञानम्-

आनन्दस्य सर्वदृष्ट्या गुणत्वात् बाधितार्थकमेव ॥

(१८६) अपरञ्च 'जीव इव बन्धका अपि' इति वाक्येन ब्रह्मगतधर्माणामपि बन्धकत्वाख्यानमसंबद्धमेव ॥

(१८७) किञ्चात्र 'अपि' शब्दो व्यर्थो विरुद्धार्थको वा पर्यवस्यन् लेखकस्य जल्पाकतामेव प्रकटयति ॥

(१८८) अपरं च 'वस्तुगत्या दोषा एव सर्वे धर्माः' इति घोषणमपि अद्वैतमते दोषत्वस्याप्यवास्तविकत्वेन परमतानुवादत्वस्याप्यसंभवेन चापसिद्धान्तपराहतमेव । 'कात्रा विनिगमना गुणपदस्य सत्त्वादिगुणपरत्वे' इति गीताभाष्ये 'निर्गुणं गुणभोक्तृ च' इत्यत्र 'गुणाः सत्त्वरजस्तमांसि'-इति व्याचक्षाणाः शङ्कराचार्या एवानुयोज्या भवता ॥

(१८९) किञ्च "योऽसौ निर्गुण इत्युक्तः शास्त्रेषु जगदीश्वरः । प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनत्वमुच्यते ॥" इति पाद्मपुराणे त्रयस्त्रिंशाध्याये पार्वतीं प्रति रुद्रोपदेश एव विनिगमनेत्यवधीयताम् ॥

(१९०) **अद्वैत० — "ब्रह्ममीमांसायाः सर्वोत्तमत्वं वेदान्तमहातात्पर्यविषयब्रह्मस्वरूपप्रतिपादकत्वेन ब्रह्ममीमांसात्वेनैव, नतु मीमांसात्वमात्रेण । तत्र यद्यपि त्रिविधमस्ति प्रामाण्यम्— यथा लौकिके पित्रादिवाक्ये आप्तमूलतया, श्रुतिसंवादेन, आप्तोक्तित्वेन च धर्माधर्मादिपरे मन्वादिवाक्ये । तस्य हि न**

युक्तिमूलकत्वेन प्रामाण्यम् । हेतुदर्शनं हि धर्माधर्मयोरप्रामाण्य एव कारणमिति हि जैमनीयाः । युक्तिमूलतया तु लौकिकेऽनुमाने प्रामाण्यम् । तन्मूल ईश्वरः सर्वज्ञ इति वाक्ये तु न श्रुतिमूलकत्वम् न वाऽऽप्तिमूलकत्वम् । ब्रह्ममीमांसायां तु त्रिविधमपि प्रामाण्यमस्ति । इदं च जैमिन्यादिसूत्रेष्वप्यविशिष्टम् । न च निरवधिक-सावधिकाप्तिभेदे किमपि प्रमाणमस्ति, इति पौरुषेयत्वे समाने तत्कर्तुर्बादरायणस्य विष्ण्ववतारत्वमकिञ्चित्करं प्रामाण्याप्रामाण्यव्यवस्थायाम् ॥''

**समीक्षा –** अत्र 'तन्मूल ईश्वरः सर्वज्ञः' इति वाक्ये तु न श्रुतिमूलकत्वम्, नवाऽऽप्तिमूलकत्वमिति कथनं 'यः सर्वज्ञः सर्ववित्' इति श्रुतिमूलकत्वात् अत एवाप्तिमूलकत्वाच्च बाधितार्थकमेव । अन्यथा ब्रह्ममीमांसायां त्रिविधमपि प्रामाण्यमस्ति–इति उक्तिरपि अपार्था स्यात् ॥

(१९१) किञ्च जैमिन्यादिसूत्रेषु त्रिविधप्रामाण्यस्याविशिष्टत्वकथनं विष्ण्ववतारत्वेन बादरायणे निरवधिकाप्तिमत्त्वात् ब्रह्मसूत्राणां अनन्तश्रुतियुक्तिमूलकतायाः सर्वैरप्याचार्यैरभ्युपगमनीयत्वात् अस्यार्थस्य सुधायां स्पष्टत्वात् बालिश्यद्योतकमेव ॥

(१९२) अन्यच्च''नच निरवधिकसावधिकाप्तिभेदे किमपि प्रमाणमस्ति–इति पौरुषेयत्वे समाने कर्तुर्बादरायणस्य विष्ण्वतारत्वमकिञ्चित्करं प्रामाण्याप्रामाण्यव्यवस्थायाम्''-इत्येतद्वाक्यजालम्–''नच विद्वत्ताविद्वत्ताभेदे किमपि प्रमाणमस्ति–इति पौरुषेयत्वे समाने न्यायसुधा-

परीक्षाकर्तुः अनन्तकृष्णशास्त्रिणः महामहोपाध्यायत्वाद्युपाधिपुच्छमकिञ्चित्करं प्रामाण्याप्रामाण्यव्यवस्थायाम्''- इत्यनेन समानयोगक्षेमम् । ''आनन्दतीर्थानाम्''-इत्युपक्रम्य ''विभाग'' इत्यन्तं सपादैकपृष्ठं पर्यालोचनागन्धस्याप्यभावात् केवलम् 'अविद्यो वा सविद्यो वा स्थूलकायः प्रशस्यते' इत्युक्तदिशा स्वकृतिकलेवरबृंहणमन्तरा न किमपि गमयति ॥

(१९३) अद्वैत० – ''सूत्रपदस्य न ब्रह्मसूत्रमात्रपरत्वम्''

''तत्र सूत्रशब्दस्य ब्रह्मसूत्रमेवार्थ इति न शङ्करभगवत्पादानाम्, अन्येषां वा भाष्यकाराणां संमतम्; महाभाष्यादौ कुत्रापि तथाऽदर्शनात् । 'अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥' 'सूचनात् सूत्रमुच्यते' इत्यादिसूत्रलक्षणानां सर्वसाधारण्यात्, ब्रह्ममीमांसाया एव प्रसिद्ध्या ब्रह्मसूत्रभाष्यप्रसङ्गेन सूत्रपदप्रयोगात् प्रकरणवशेन परविद्यात्वं ब्रह्मसूत्राणामित्यर्थलाभेनापीष्टसिद्ध्या सूत्रपदस्य ब्रह्मसूत्रमात्रपरत्वकल्पनायां प्रमाणाभावात् । 'निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।' इति श्रीमदानन्दतीर्थपादोद्धृतं वचनं तु–'चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ।' 'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥' इति ब्रह्मसूत्राणि प्रक्रम्य प्रवृत्तं ब्रह्मस्तुतिपरम्; 'चकार ब्रह्मसूत्राणि' इति ब्रह्मसूत्रपदायोगात् ॥''

**समीक्षा** – सम्प्रति निर्विशेषितसूत्रत्वं च कर्तृवाचकोपपदरहित-पदवाच्यत्वं विवक्षितम्–यथा जैमिनिसूत्रं पाणिनिसूत्रं पतञ्जलिसूत्रम्–इत्यादिषु कर्तृवाचकपदनिर्देशः तथा ब्रह्मसूत्राणां व्याससूत्रमिति व्यवहारः पुराणादिषु न दृश्यते । ब्रह्मसूत्रमिति व्यवहारसद्भावेऽपि निर्विशेषितसूत्रत्वं तस्य अक्षतमेव ॥

(१९४) **अद्वैत०** – **"तत्र– 'अथातो ब्रह्मजिज्ञासा' इति भगवत्पादश्रीशङ्कर-श्रीरामानुजादीनां श्रीवल्लभाचार्यान्तानां सम्प्रदायसूत्रपाठः, भगवत्पादानन्दतीर्थसम्प्रदाये तु 'ओम् अथातो ब्रह्मजिज्ञासा' इत्योमित्याद्यन्तयोरोंकारघटितः सूत्रपाठः, किं बहुना ? सर्वाणि ब्रह्मसूत्राण्याद्यन्तयोरोंकारपदघटितान्येवाधीयन्ते श्रीमाध्वसम्प्रदाये । तत्र– 'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्माद् माङ्गलिकावुभौ ॥' इति यद्यप्योंकाराथशब्दयोर्माङ्गलिकत्वं स्मर्यते; तथाऽपि तत्र– 'सर्वत्रानुगतत्वेन पृथगोंक्रियतेऽखिलैः ।' इति ब्रह्मसूत्रावयवतया तत्पाठो न प्रामाणिकः; अन्यथा वेदवाक्यानामपि प्रतिविधिवाक्यं प्रतिमन्त्रं चादावन्ते चों(?)कारपाठापत्त्याऽध्येतॄणां प्रतिविधि प्रतिमन्त्रं च तदध्ययनापत्तिप्रसङ्गः, अविघ्नसमाप्त्येऽध्ययनोपक्रमादौ तत्प्रयोगस्तु न तदवयवत्वेन, किन्तु स्वतन्त्रं मङ्गलार्थम् ।** 'मङ्गलार्थमपि मीमांसायामोंकारपाठानौचित्यम्' **ब्रह्मसूत्रेषु तु सर्वोपक्रमेऽथशब्दस्याप्योंकारवद् मङ्गलार्थत्वात् तेनैव तन्त्रेण**

**सार्थकेनेष्टनिर्वाहादोंकारस्यापि मङ्गलार्थे नोच्चारणमावश्यकम् । मङ्गलाधिक्यमधिकाय फलायेति कृत्वौंकारस्यापि सूत्राद् बहिः स्वतन्त्रमङ्गलार्थतया न दण्डेन वार्यते, यदि अथ शब्दमात्रेण नालमिति कस्यचनाऽनाश्वासः स्यात् । बादरायणस्य तु भगवदवतारस्य न तादृशानाश्वाससंभावना ।।"**

**समीक्षा –** अत्रेदं वक्तव्यम्–ओंकारः सूत्रावयव एव । प्रकृते तदवयवत्वं च तत्कार्यकारित्वम् । तत्कार्यं दृष्टादृष्टसाधारणम् । प्रथम-सूत्रादावुपात्तोंकारस्य गुणपूर्णार्थकत्वेन ब्रह्मशब्दस्य रूढ्या विष्णुपरत्वेन गुणपरिपूर्णविष्णुजिज्ञासा कर्तव्या-इत्यर्थस्य सम्पन्नत्वेन प्रथमसूत्रवाक्यार्थ-घटकार्थकतया तस्यावयवत्वं सुवचम् । प्रथमसूत्रान्ते पठ्यमानस्य द्वितीयादिसूत्रेषु चाद्यन्तयोरुच्चार्यमाणस्य तस्य अदृष्टरूपसूत्रकार्यस्य निर्वाहकतयावयवत्वं निर्व्यूढम् । अत्र च 'स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यते'इति श्रुतिः प्रमाणम् । न चात्र ब्रह्मपदस्य वेदमात्रार्थकतया सूत्रे नास्य प्रमाणस्य प्रसर इति वाच्यम्; 'छन्दोवत्सूत्राणि भवन्ति' इत्यनुशासनेन सूत्रस्यापि तत्प्रमाणविषयत्वोपपत्तेः । अन्यथा वेदपाठारम्भासाधारणशान्तिपाठस्यापि सूत्रपाठावसरेऽनवकाशप्रसङ्गः ।।

(१९५) किञ्च–'तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ।।' इति भगवद्गीतावचनप्रामाण्येन ब्रह्मवादिनां यज्ञदानतपःक्रियादिषु ओंकारोच्चारणस्य विहितत्वलाभात् । ब्रह्मसूत्रपाठप्रवचनादेः ज्ञानदानरूपत्वात् 'तद्धि तपस्तद्धि तपः'–

इत्युक्तपौरुषत्वाच्च उक्तगीतावचनमत्र साधु समन्वेति । यदि भवदुक्तदिशा शंकररामानुजप्रभृतयः अनोंकृतं ब्रह्मसूत्रं पठन्ति तर्हि 'सततं ब्रह्मवादिनाम्'—इत्येतत्प्रतीपतया ते अब्रह्मवादिन एव स्युः ॥

(१९६) अन्यच्च— वेदे प्रतिऋचं मन्त्रत्वश्रवणात् तत्र सर्वत्रोंकारपाठः उक्तप्रमाणानुरोधेन अदृष्टविशेषजनकतया अन्यथा प्रत्यवायजनकतया चावश्यक एव । साम्प्रतं क्वचित् व्यवहारे तददर्शनमालस्याज्ञाननिबन्धनं प्रतिऋचं जायमानफलविशेषानुद्देशेन अध्यायादिपाठजन्यफलमात्रप्रतिसन्धानेनेति वा निर्वाह्यम् । आदिमोंकारस्य उक्तरीत्यान्यार्थत्वेऽपि विघ्नवारकत्वस्याप्यनपायः ॥

(१९७) ननु अथशब्देनैव वारितो विघ्न-इति चेत् शिष्याणां प्रत्यूहव्यूहसंभावनया बादरायणस्य स्वतः अनाश्वासासंभावनायामपि शिष्यहितप्रतिसन्धानेन बहुमङ्गलकरणोपपत्तेः । सर्वमिदं श्रीमन्न्यायसुधायामेव व्यक्तम् ॥

(१९८) यत्तु अन्यथा प्रतिमन्त्रम् ओमथेति पाठोऽपि कर्तव्यः स्यादित्यापादनं तत्र 'प्रयोगे सति निमित्तानुसरणम् नतु निमित्तमस्तीति प्रयोगः' इति न्यायेन समाधीयताम् ॥

(१९९) ननु गारुडे 'अथातःशब्दपूर्वाणि' इत्येव श्रूयते, नत्वोमथात इति चेत्, न, प्रष्टुर्नारदस्योक्तप्रमाणेनोंकारपाठावश्यक-

तायाः सिद्धतया तद् विहाय अज्ञाते 'अथातः' इत्यंश एव प्रश्नोन्मे षौचित्यात् ॥

(२००) अपरञ्च अत्र प्रसङ्गे 'निखिलानि सत्राणि–' इति गारुडवाक्ये निरुपपदसूत्रशब्देन जैमिन्यादिसूत्राणामपि ग्रहणेन निरुपपदसत्रशब्दस्य ब्रह्मसूत्रमात्रपरत्वमेवेति नियमो भग्न इति यद् आक्षिप्तं तत्रेदमवधेयम्–निखिलानीति पदस्य तत्तत्कर्तृकाणीत्यर्थविवक्षणात् क वाचकपदसमभिव्याहृतत्वमेवायातमिति अन्यसूत्राणामपि ग्रहणे न किंचिद् बाधकमिति ॥

(२०१) ननु महाभाष्यकारादयः पाणिनिसूत्रादीनि तथा न पठन्ति नवा पाठयन्ति इति यद् अभ्यधायि तदस्मदुद्धृतप्रमाणविरोधादनास्थेयमेव । तेषां महर्षीणां ब्रह्मवादित्वेन ओंकारपठनस्यैव न्यायप्राप्तत्वात् । तद्ग्रन्थेषु ओंकारादर्शने तदूहः कर्तव्यः ॥

(२०२) अद्वैत० – **"एतेन–ओंकारस्य परविद्यावयवेषु ऊहवादोऽपि परास्तः । ऊहो हि प्रकृतिविकृतिभावे, तदुभयाङ्गेषु वैकृतेषु केवलं प्रवर्तते, न तु प्राकृतेष्वपि । नहि वेदान्तवाक्यानां परविद्यापराणां प्रतिवाक्यमङ्गाङ्गिभावः, प्रकृतिविकृतिभावो वा ॥**

**समीक्षा** – नात्र मीमांसकपरिभाषित ऊहः, 'किन्तु अध्याहारस्तर्क ऊहः' इति कोषप्रथित एवेत्यस्मत्तात्पर्यचन्द्रिकायामेव स्फुटमभिहितम् ॥

(२०३) **अद्वैत० —** ओंकारस्याप्योंकारपूर्वकत्वापत्त्यादिः ।

**"ओंकारस्य स्वतन्त्रस्य मन्त्रत्वे तस्याप्यादावन्ते चौं(?)-कारपूर्वकत्वापत्तिः, अमन्त्रत्वे मन्त्रस्यामन्त्रपूर्वत्वेऽमन्त्रत्वमेव स्यात् ; आनुपूर्वीभेदात् ।।"**

**समीक्षा—** अत्रेयं प्रतिबन्दी – कार्यारम्भे मङ्गलाचरणस्या-वश्यकत्वे मङ्गलाचरणस्यापि कार्यविशेषत्वेन तदारम्भे मङ्गलाचरणा-न्तरापत्तिः, तत्राप्येवमित्यनवस्था । कार्यारम्भे मङ्गलाचरणस्या नपेक्षितत्वे कार्य रम्भेशिष्टाचारपरम्परा-प्राप्तमङ्गलाचरणस्याकरणीयत्वापत्तिः-इत्यत्रेव ओंकारस्य मन्त्रत्वे ओंकारान्तरापत्तिरनुत्थापनीयैव ।।

(२०४) **अद्वैत०—"तत्र स्रवत्यनोंकृतं ब्रह्म" इत्यर्थवादः कथश्चन पूर्वोद्धृतगरुडपुराणवचनानुसारेण शास्त्रोपक्रमस्यैवोंकार-पूर्वत्वविधिमुन्नेतुं शक्नोति, नतु प्रतिसूत्रम्, न वाऽऽदाविवान्तेऽपि तत्पाठविधिम् । ओंकारस्यापि प्रतिसूत्रं प्रतिवाक्यार्थं वाऽन्वयो नास्त्येव ।।"**

**समीक्षा—**अत्र 'परस्ताच्च विशीर्यते' इत्यर्थवादवाक्येन अन्तेऽ-प्योंकारपठनस्य विहितत्वावगमात् शास्त्रोपक्रमस्यैवोंकारपूर्वकत्वमित्या-ग्रहो दुराग्रहग्रह एव ।।

(२०५) किञ्च ओंकारस्य गारुडानुरोधेन माङ्गलिकत्वेन ग्रन्थो-

पक्रमे पाठं यदि भवान् अनुमन्यते तर्हि तत एव 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि प्रथन्ते, आयुष्मत्पुरुषकाणि च भवन्ति' इति वचनात् ओंकारपठनं सर्वत्र दण्डावारितमेव ॥

(२०६) अन्यच्च ओंकारस्य गुणपूर्णार्थकतया प्रतिसूत्रमारम्भे गुणपूर्णत्वप्रतिज्ञार्थतया अन्ते च तन्निगमनार्थतया च ब्रह्मणः गुणपूर्णत्वसमर्थनोद्देशेन प्रवृत्तसर्वसूत्रवाक्यार्थघटकार्थपरतयाऽवयवत्वं निरापदमेव ॥

(२०७) ननु 'ओतत्त्ववाची ह्योंकारः वक्त्यसौ तद्गुणोतताम् ॥' 'स एव ब्रह्मशब्दार्थः' इत्यनुव्याख्यानोक्तरीत्या ओंकारार्थस्यैव ब्रह्मपदार्थत्वे ब्रह्मपदवैयर्थ्यमपरिहार्यम् इति चेत्, न, वेदे जिज्ञासाविधानार्थे 'तद्विजिज्ञासस्व, तद् ब्रह्मेति'इति निर्देशः क्वचित्, कुत्रचिच्च 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादि । तत्र जिज्ञास्यस्येतरव्यावर्तकतया क्वचिद् ब्रह्मशब्दः, क्वचिच्च ओंकारः, कुत्रचित् आत्मशब्दः, इत्यादयो विवक्ष्यन्ते इति ज्ञापनार्थं ओंकारब्रह्मपदयोरुभयोरपि प्रयोगः—इति नान्यतरस्य वैयर्थ्यम् ॥ (अद्वैततत्त्वसुधाकर्ता सर्वत्र 'ओमाङोश्च' इत्यनुशासनं लङ्घयति)

(२०८) अद्वैत० — 'अकारः सर्ववागात्मा परब्रह्माभिधायकः । तथौ प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ ॥' इति गरुडपुराणवचनेन यदि सर्वात्म-सर्वव्यापकनियामकस्वरूपमोंकारार्थः, तर्हि स कथं नारायणपदपर्यायः ? अयं चार्थो ब्रह्म-

पदेनाप्यवगम्यत इत्येव द्वैतसिद्धान्तात् किमर्थं वाऽस्यौंकारेणापि विवरणम् ? तत्रौमर्थो ब्रह्मविष्णुशिवात्मकं मायोपहितं स्वरूपम्, यदेव सदाशिव - नारायणादिपदबोध्यं सृष्टिस्थिति-संहारकारणं व्यापकमुपास्यपरमकाष्ठारूपं सगुणमवान्तरतात्पर्य-विषयः; 'जन्माद्यस्य यतः' इत्युत्तरसूत्रे तटस्थलक्षण-लक्षितम् ॥"

**समीक्षा** – अत्र गरुडपुराणवाक्यम् ओंकारार्थव्याख्यानरूपम् इति भवता भ्रान्तम् । वस्तुतस्तु अथातः । शब्दव्याख्यानमेव तत् ॥

(२०९) किञ्च 'ओंकारेणैव सर्वा वाक् संतृण्णा'–इत्यादिश्रुत्या ओंकारार्थस्य सर्ववेदार्थतया तत्र अवान्तरतात्पर्यविषयत्वकथनमयुक्तम् ॥

(२१०) अद्वैत० – "ब्रह्मजिज्ञासेति समस्तपदघटक-ब्रह्मशब्देनौंपदस्य स्वतन्त्रस्यानन्वयेन सूत्रार्थसमन्वयाभावात् ॥"

**समीक्षा** – एतच्छङ्कायाः तात्पर्यचन्द्रिकायाम् अङ्गावतारन्यायेन परिहारः स्पष्टः ॥

(२११) अद्वैत० – "एतेन – भर्गशब्दार्थोऽपि – व्याख्यातः । सहि विष्णुपदस्य नारायणपरत्ववद् रुद्रपरत्व एव प्रसिद्धः ॥"

**समीक्षा** – समन्वयाध्याये अन्यत्र प्रसिद्धानां सर्वेषां शब्दानां

परब्रह्मणि समन्वयसमर्थनेन भर्गशब्दस्य रुद्रे प्रसिद्धिः नास्माकं विरोधिनी ॥

(२१२) अद्वैत० - " तत्र शोधितस्त्वंपदार्थ इव शोधितस्तत्पदार्थोऽपि, इति तत्त्वमसि - वाक्यार्थ आत्मैव प्रमाणान्तरेणाज्ञातः 'आत्मा वा अरे द्रष्टव्यः' इति विषयवाक्यस्य विषय इति सङ्गतिरप्यविकला । न चैवं सति पूर्वोत्तरयोः पक्षयोर्भिन्नविषयता द्वैतमत इव । तत्र प्रत्यक्षावगतशरीरेन्द्रियात्मकजीवात्मस्वरूपमतिरिच्य तद्विरोधेऽपि श्रुत्या यदीश्वरो जीवव्यतिरिक्तः प्रामाणिकः, तर्हि जीवोऽपि पूर्वोक्तः प्रत्यक्षाद्यनवगतः कथं न वेदान्तप्रतिपाद्यो भवति ? प्रत्यक्षविरोधस्तूभयत्र समानः । किं बहुना ? अहं गच्छामि गौरः स्थूलः इति प्रत्यक्षविरोधेऽन्यत् सर्वं यदि प्रमाणम्, तर्हि कथं श्रुतिः, तदुपबृंहितमनुमानादि च न प्रमाणम् ? कथं च तद् जरद्गवादिवाक्यवत् उन्मत्तवाक्यमिव वा ? कथं चाकर्त्रादिजीवस्वरूपबोधकं वाक्यमुन्मत्तवाक्यम्; अपौरुषेयत्वात्तद्वाक्यस्य ? अन्यथेश्वर-परत्वेऽपि कथं वेदान्तवाक्यानि न जरद्गवादिवाक्यवद् भवेयुः ॥"

**समीक्षा** – अत्र प्रत्यक्षाद्यनवगतः जीवः वेदान्तप्रतिपाद्य इत्यनुपपन्नम् , तथा सति वेदान्तवाक्यजन्यज्ञानेन प्रत्यक्षसिद्धकर्तृत्वभोक्तृत्वादेर्बाधस्त्वदीप्सितो न सिद्ध्येत् , भिन्नविषयकत्वात् । शुक्तौ प्रत्यक्षतः प्रतीयमानं हि रजतं शुक्तिप्रत्यक्षेण बाध्यते । तथा च वेदान्तवाक्यप्रति-

पाद्यस्य प्रत्यक्षाद्यवगतत्वमेव त्वयाऽङ्गीकार्यम्, प्रत्यक्षसिद्धकर्तृत्वादेः वेदान्तवाक्ये निषेधे प्रत्यक्षविरोधो दुरुद्धरः । इत्थंच वेदान्तवाक्यस्य उन्मत्तवाक्यत्वमेव स्यात् । एतस्यामापत्तौ श्रीमता प्रत्यक्षविरोधपरिहारे एव यत्नः कार्यः, नतु वेदस्यापौरुषेयत्वकथनेन कृतकृत्यता मन्येत । अन्यथा 'यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यात्' इत्यापादकं पुरुषं प्रति 'नेयमापत्तिः धूमस्य प्रत्यक्षसिद्धत्वात्' इति समादधत् पुरुषोऽपि कृती स्यात् । अत्र वेदान्त ईश्वरप्रतिपादनेऽपि प्रत्यक्षविरोधः समान इति प्रतिबन्द्युद्भावनमनवसरदुःस्थम् । वेदान्तवाक्यानां प्रत्यक्षसिद्ध-व्यतिरिक्तेश्वरविषयकत्वेन विभिन्नविषयकतया प्रत्यक्षविरोधानवकाशेन वैषम्यात् ॥

(२१३) अद्वैत० – **"नच विगलितान्तःकरणादिबन्ध-स्यात्मनो वेदान्तवेद्यस्य जीवगोचरप्रत्यक्षेण बाधः सुवचः; अन्यथा जीवमोक्षप्रतिपादनपरवेदान्तानामप्यप्रामाण्यापत्तिः । यदि मुक्तात्मप्रतिपादनेन वेदान्तानामविरोधः, तर्ह्यकर्तृत्वादिस्व-रूपसंविन्मात्रस्येश्वरत्वोपलक्षिताखण्डसंविन्मात्रस्यैव मुक्तात्म-त्वात् प्रत्याक्षस्यागमेन बाधो दुरपह्नवः ॥"**

**समीक्षा–** अत्र जीवात्मनः प्रत्यक्षसिद्धान्तःकरणादिबन्धनिवृत्तिं मोक्षकाले श्रुतिः प्रतिपादयति । अतः इदानीं प्रत्यक्षगृहीतस्यान्तःकर-णादिबन्धस्य अपलापं श्रुतिर्न विधत्ते । अद्वैतमते तु बन्धस्य त्रैकालिक !

निषेधप्रतियोगित्वेन रूपेण प्रतिपादिका श्रुतिः प्रत्यक्षं कथं न विरुणद्धि ? अतो मुक्तात्मप्रतिबन्धा नात्राऽऽस्पदम् ॥

**(२१४) अद्वैत० – "युक्तत्वे हि सर्वत्र प्रविष्टत्वं ब्रह्मण एव सर्वात्मनः, 'सर्वं खल्विदं ब्रह्मे'ति सर्वात्मतया, अधिष्ठानत्वेन वा, न तु गुणपूर्णत्वमोतशब्दार्थः, गुणानाममूर्तानां प्रवेशासंभवात् ॥"**

**समीक्षा–** अत्रामूतानां गुणानां प्रवेशासंभवं प्रतिपादयन् भवान् ब्रह्मणोऽप्यमूर्तत्वात् 'सर्वत्र प्रविष्टत्वं ब्रह्मण एवे'ति कथं लपति निरर्गलम् ? 'त्वं चोरः पुरुषत्वात्' इतिवत् स्वन्यायविरोधात् ॥

**(२१५) अद्वैत०–"ओतशब्देन कर्मणि व्युत्पन्नेन गुणैः प्रविष्टत्ववर्णनं तु 'तदनुप्रविश्ये'ति ब्रह्मण एवान्तर्यामिणोऽधिष्ठानस्य प्रवेशकर्तृत्वबोधनात् जगद्वाचित्वेन न ब्रह्मवाचित्वसंभवः, इति कर्तृवाचित्वमेव । तत्र ब्रह्मणः प्रवेशकर्तृत्वं तु तत्सृष्टमात्रस्य तदात्मतया 'सन् घटः' इत्येवंरूपेण प्रतीयमानस्येति जगज्जन्मादिनिमित्तकारणतामात्रत्वे ब्रह्मण ओतत्वमसम्भवि, इत्योंपदस्य मङ्गलार्थस्य सूत्रावयवतया प्रयोगेऽप्योतत्ववाचिन ओंपदस्याद्वैतानुगुणं विवरणमेव युक्तम् ॥"**

**समीक्षा–** अत्र 'वर्णनन्तु' इतीदमनन्वितमवतिष्ठते । न्यायसुधापरीक्षार्थं बद्धपरिकरस्याम्य स्ववाक्यौचित्यपरीक्षायामप्यक्षमत्वं भूयस्सु

स्थलेषु वीक्ष्य विलक्षा भवामः । किञ्च भगवति निस्सीमाचिन्त्यमहिमनि सर्वाधारत्वं सर्वस्मिन् प्रविष्टत्वं च बहुतरप्रमाणसिद्धत्वात् सूपपादम् । "तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।" "अहमात्मा गुडाकेश सर्वभूताशयस्थितः" इत्यादीनि भूयांसि प्रमाणानि अत्र सुधियो विभावयन्तु । वस्तुतस्तु गुणैः प्रविष्टत्वं नाम गुणप्रतियोगिकसम्बन्धः । सच सविशेषाभेदरूपः-इति सर्वमनवद्यम् ॥

(२१६) अन्यच्च 'जगन्निमित्तकारणत्वे ओतत्वमसंभवि' इतियत् प्रतिज्ञा तंतत् कालादीनां विभूनां कार्यमात्रे निमित्तभूतानामोतत्वदर्शनेन तद्वद् ब्रह्मणोऽपि सम्भवेन बाधितमेव ॥

(२१७) किञ्च 'ब्रह्मणः प्रवेशकर्तृत्वं तु तत्सृष्टमात्रस्य तदात्मतया' इति यौष्माकीणोपपादनमेवासम्बद्धम् ; अभिन्ने वस्तुनि प्रवेशकर्तृत्वकर्मत्वयोर्विरुद्धत्वात् । अधिष्ठानभूते शुक्त्यादौ रजतादिकर्मकप्रवेशकर्तृत्वाव्यवहाराच्च ॥

(२१८) अद्वैत० – **"इयान् विशेषः– तत्र जिज्ञासाशब्दसूचितं तदर्थैकदेशज्ञानमात्रं नाप्यतमम् । तच्चाविद्यानिवर्तकमवगतिपर्यन्तमखण्डाकारवृत्तिमात्रम्, न ब्रह्मस्वरूपम् ; तस्य नित्याप्तस्यानाप्यत्वात्,तदप्राप्तिभ्रमनिवृत्तिमात्रस्याप्याप्यत्वाच्च न ततोऽतिरिक्तं किमपीत्यद्वैतसिद्धान्तः । द्वैतसिद्धान्तस्तु प्राप्यतमं ब्रह्मस्वरूपमिति ॥"**

**समीक्षा** – अत्र भ्रमनिवृत्तेः आत्मातिरिक्तत्वे तस्या मिथ्यात्वेन मिथ्याभूतस्यैव संसारे इव आप्यत्वापत्तिः, तथा च संसारमोक्षयोर्वैलक्षण्यं न स्यात् । आत्मरूपत्वे तस्य नित्याप्तत्वादाप्यत्वानुपपत्तिः । चरमवृत्त्युपलक्षितस्यात्मनः भ्रमनिवृत्तिस्वरूपत्वेऽपि पुनस्तद्दोषतादवस्थ्यम्, २४५ तमे पृष्ठे 'रजतं यथा शुक्तेरुपलक्षणम्, एवं जगद् ब्रह्मणः उपलक्षणम्' इति भवता वक्ष्यमाणत्वेन वृत्त्युपलक्षितत्वं वृत्त्यारोपाधिष्ठानत्वमेवेत्येव फलति । सर्वारोपचरमनिवृत्तिकाले वृत्त्यारोपत्वासंभवात् तदारोपस्येदानीमेव वक्तव्यतया चरमवृत्त्यारोपाधिष्ठानस्यात्मन इदानीमेव सत्त्वेनाऽऽप्यत्वायोगात् ॥

(२१९) अद्वैत०– **"तत्र प्रयोजनं विशिष्य सूत्रण साक्षाद् निर्दिष्टम्, द्वैतसिद्धान्ते तु न साक्षाद्, विशिष्य । सूत्रकारस्याऽऽप्तत्वात् सप्रयोजनत्वमात्रमवगतं स्यात्, न तु प्रयोजनविशेषः । अतो विचारे प्रवृत्तिः सूपपादाऽद्वैतराद्धान्ते । विचारस्तु संशयाधीनः । संशयस्तु विचारणीयवाक्ये कोटिद्वयोपस्थापकपदविशेषादिसमभिव्याहर-बलाबलनिर्णयाभावनिबन्धनः ॥"**

**समीक्षा** – अस्मन्मते 'अतः' शब्दस्य मोक्षाख्यफलसद्भावात् इत्यर्थाभिधानेन फलविशेषो न निर्दिष्ट इत्यपलापः दुराग्रहपटलच्छन्नचक्षुष्कताम् अज्ञतां वा गमयति ॥

(२२०) किञ्च अद्वैतराद्धान्ते निर्विशेषे विचारप्रयोजकसंशय

एव न व्युत्तिष्ठते । सर्वकोटिविनिर्मुक्ते तस्मिन् कोटिद्वयोपस्थापकस्या-सम्भवात् ॥

(२२१) अन्यच्च– 'तद्विजिज्ञासस्व, तद् ब्रह्म' इति श्रुतिस्थ-ब्रह्मशब्दस्य 'बृहन्तो ह्यस्मिन् गुणाः' इति श्रुत्या अनन्तगुणपूर्णत्व-मर्थः, नतु सूत्रघटकब्रह्मशब्दस्य । तत्र तु रूढिमात्रविवक्षया विष्णु-रित्यर्थः, ओंकारस्य च गुणपूर्णत्वमर्थ इति पौनरुक्त्यपरिहारस्य सुधाटिप्प-णीपु स्पष्टतयोल्लेखात् तदनवबुध्यैव पराक्रान्तं परीक्षकेण ॥

**(२२२) अद्वैत० – "एतेन–वाक्यत्वमोंपदस्य, ब्रह्मपदस्य चेति – प्रत्युक्तम् । अल्पाक्षरासन्दिग्धविश्वतोमुखात्मकसूत्रस्य वाक्यद्वयघटितत्वकल्पनं निष्प्रयोजनमपि । एकेनापि ब्रह्मपरेण पदेन, वाक्येन वा जडव्यावृत्तिः जीवव्यावृत्तिश्च सिद्ध्यतः इति न तदर्थमप्येकतरापेक्षा नियता ॥"**

**समीक्षा–** अत्र ओंपदस्य ब्रह्मपदस्य च यौगिकत्वेन अवयवार्थ-संसर्गबोधकतया वाक्यतुल्यत्वमेव सुधाकारविवक्षितम् , नतु वाक्यत्वम्-इति सुधाटिप्पणीषु व्यक्तम् । अतः सूत्रे वाक्यद्वयघटितत्वशङ्कानवसरः ॥

(२२३) किञ्च विषयवाक्येषु जिज्ञास्ये इतरभेदसाधकानाम् ओमादिपदानां सर्वेषां ग्रहणार्थमुपलक्षणतयोंपदं गृहीतमिति द्योतनार्थं ब्रह्मपदस्याप्युपादानमिति न पदद्वयस्य वैयर्थ्यमिति पूर्वमेवाभिहित-मस्माभिरत्र ॥

(२२४) अद्वैत० — "तत्र जिज्ञासाविषयत्वमपि न जीव-जडव्यावृत्तस्य सगुणस्य; ईश्वरो जडजीवभिन्नः इति प्रत्यक्षादिनाप्यवगतत्वात् । न च जडजीवव्यावृत्ते ब्रह्मणि प्रमाणान्तरावगते संशयोऽपि । ब्रह्मशब्दार्थगुणवत्त्वाभावेनैवानुमानिको जड-जीवप्रतियोगिको भेद एकेनापि पदेनानन्तकल्याणगुणबोधकेन सिद्ध्यति; अन्यथा पदद्वयेन, वाक्यद्वयेन वा तद्व्यावृत्त्यसिद्ध्या विचारितमप्यज्ञातमेव स्यात् । इति नात्र जिज्ञास्यस्वरूपनिर्देशः स्यात् ॥"

**समीक्षा** — अत्र सगुणस्य जिज्ञासाविषयत्वं निह्नुवानो भवान् १३३ तमे पृष्ठे 'सगुणस्य जिज्ञास्यत्वे स्वस्य द्वैतिभ्योऽविवादं प्रत्यश्रौषीत्' इति पूर्वापरविरोधं व्यस्मार्षीत् ॥

(२२५) किञ्च ईश्वरो जडजीवभिन्न इति प्रत्यक्षादिनाप्यवगतत्वं वदन् भवान् जातेश्वरसाक्षात्कारः इति ख्यापयत्यात्मानं बालिशेषु? ॥

(२२६) अद्वैत०—"इदमेवाभिप्रेत्योक्तम् — अकारवाच्येन तत्पदार्थेनोकारवाच्यस्याभेदो मकारेणोच्यते, नित्यशुद्ध-ब्रह्मस्वरूपं वा ब्रह्मैवोंकारार्थ इति च । न चेदमप्रामाणिकम्, प्रमाणविरुद्धं वा । नित्यशुद्ध-बुद्धस्वरूपं हि ब्रह्म निर्विशेषप्रत्यगभिन्नसंविन्मात्रम्, शुद्धत्वात्, अनावृतत्वात् तद्व्यतिरेकेण जडानामभावाद्वा न पारमार्थिकजडभेदवत्, उपाधिनाशे तद्भेदप्रयुक्तजीवभेदाभावात् वस्तुगत्या प्रत्यगभिन्नत्वाच्च न तद् जीवव्यावृत्तम्, इति नित्यशुद्धमुक्त-

**स्वभावं ब्रह्मेति विवरणं जीवादिव्यतिरिक्तवस्तुसाधनविरोधीति वचनं व्याहतम्, इति जडजीवव्यावृत्तब्रह्मबोधनार्थमोंब्रह्मेतिपद-द्वयमिति न युक्तम्॥"**

**समीक्षा –** अत्र सुधावाक्यमनूद्य नकारमात्रं तत्र संयोज्य अप्रामाणिकत्वाद्यभावप्रतिज्ञामात्रेण न भवेद् भवान् कृती । प्रमाणो-पन्यासमन्तरा प्रतिज्ञातार्थासिद्धेः॥

(२२७) किञ्च नित्यशुद्धबुद्धस्वरूपमिति व्याख्यानं सुधा-कारानूदितं ब्रह्मशब्दस्य, न त्वोंकारस्य। भवता त्वोंकारव्याख्यात्वेन भ्रान्तम्, तथा तत् रामानुजीयव्याख्यानं सुधायामनूदितम्, अद्वैत-मतीयव्याख्यानमित्यपि विपर्यस्तम्। किं ब्रूमः? अभिनिवेशरभसाभ्यां प्रवर्तिते पदन्यासे पदे पदे स्खलनं नैसर्गिकमेव। अत एव 'शुचि भूषयति श्रुतं वपुः' इति भारविवचनं व्याचक्षाणो मल्लिनाथः 'शुचि सम्प्रदायशुद्धम्, श्रुतं=अध्ययनम्' इति तात्त्विकमेव जगाद॥

(२२८) अद्वैत० **– कथञ्चन तस्य योगेऽपि ब्रह्मपदेन सर्वजगत्कारणं मायोपहितमेवोच्यते; उत्तरसूत्रस्वारस्यात्॥"**

**समीक्षा –** अत्र 'ब्रह्मपदेन मायोपहितमेवोच्यते' इति निष्कर्षता एवकारेण निर्विशेषस्य जिज्ञास्यत्वं दण्डवारितमेवेत्यपसिद्धान्तः। नच एवकारेण विष्णोरेव व्यावृत्तिः, नतु निर्विशेषस्येति वाच्यम्, विष्णोर्जग-

ज्जन्मादिकारणत्वरूपोत्तरसूत्रोक्तहेत्वभावे निर्विशेषस्य सुतरां तदसम्भवात् निर्विशेषव्यावृत्तेरपि त्वदुक्तयुक्तिविषयत्वात् ॥

(२२९) **अद्वैत० – "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि' इत्यत्र भर्गशब्दो ज्योतिर्मत्रपरोऽपि सामान्येन ज्योतिः-पदं स्वप्रकाशचिन्मात्रमेव बोधयति। निघण्टुप्रसिद्धस्तु भर्गः शिव एव, इति न स नारायणपदवाच्यं स्वरूपम् किमपि वदति ॥"**

**समीक्षा –** अत्र भर्गशब्देन स्वप्रकाशचिन्मात्रविवक्षायां 'सवितुः भर्गः' इति सवितृसम्बन्धः नैव समन्वीयात्, स्वप्रकाशस्य परप्रकाशत्वायोगात्। नच सवितृशब्देन चिन्मात्रमेव जिघृक्षितमिति वाच्यम्, प्रकाशरूपत्वेन स्वीकृतस्य तस्य सवितुरिति षष्ठ्यर्थ-सम्बन्धानुपपत्तेः ॥

(२३०) अन्यच्च 'धीमहि–' इति ध्येयत्वस्य चिन्मात्रे सम्पातात् तस्य मिथ्यात्वापत्तेर्दुर्वारत्वात्। भवदद्वैतमते उपास्यस्य मिथ्यात्व-नियमात्। निघण्टुप्रसिद्धेः गतिः प्रदर्शितचरी ॥

(२३१) **"भूर्भुवस्सुवः" इत्यादिकमपि भूमसुखस्वरूपं न विशिष्य नारायणपदवाच्यम्। "स ब्रह्म स शिवः स हरिः सेन्द्र" इति हि "सहस्रशीर्षे"ति प्रस्तुत्य सर्वात्मकं ब्रह्मैव पुरुष-सूक्तमपि बोधयति, इति पुरुषनारायणशिवादिपदानि ब्रह्मणः**

**पर्यायपदानि, इति ब्रह्मणो नारायणपदमात्रवाच्यत्वनियमो न प्रामाणिकः ॥"**

**समीक्षा**— अत्र स ब्रह्म स शिव—इत्यादिना ब्रह्मशिवादिशब्द-वाच्यत्वं एतन्निर्वचनलभ्यप्रवृत्तिनिमित्तवत्त्वेन विष्णावेव सिषाधयिषितम्, न त्वैक्यमत्राभिप्रेयम् । अन्यथा-'यः परः स महेश्वरः'—इति महेश्वरपदेन रुद्रैक्यं कथितमिति पुनः शिवपदेन तत्कथने पौनरुक्त्यं दत्तहस्तावलम्बनं स्यात् । पुरुषसूक्तेऽपि पुरुष एव इदं सर्वम् इत्यनेन सर्वस्य पुरुषाधीनत्व-मेव आम्नायते, "यदधीना यस्य सत्ता तत्तदित्येव भण्यते" इति वचनात् । अत एव 'विश्वमेवेदं पुरुषः तद्विश्वमुपजीवति' इति पूर्वार्धेन पुरुषसूक्तोक्तमनूद्य तद्विश्वमुपजीवतीत्युत्तरार्धेन तद्व्याख्यानं घटते ॥

(२३२) **अद्वैत० — "नारायणब्रह्मत्वबोधिकाः, सदा-शिवब्रह्मत्वबोधिकाः, नित्यशुद्धमुक्तादिनिर्विशेषब्रह्मस्वरूपमात्र-प्रतिपादिकाश्च बहव उपनिषदो नारायणपरमात्मत्वबोधकश्रुत्य-पेक्षयाऽप्यधिका अद्वैततत्त्वशुद्धौ भूमिकायां समुद्धृता नारायणपद-मात्रवाच्यत्वे ब्रह्मणो विरुद्ध्यन्ते ॥"**

**समीक्षा** — तृतीयपृष्ठे 'न बहुत्वाल्पत्वप्रयुक्तो बाध्यबाधक-भावः'—इत्यनेन बहुत्वाल्पप्रयुक्तं बाध्यबाधकं प्रतिषिद्ध्य अत्र पुनस्त-त्प्रतीपकथनं परीक्षकमानिमानं विनाशयति । न चायमभ्युपगमवाद इति वक्तुं साम्प्रतम्, वास्तविकसमाधानान्तरानुक्तेः । अस्माकन्तु सदाशिवादि-

ब्रह्मत्वबोधिकाः श्रुतयः परब्रह्मणि नारायणे महायोगवृत्त्या सदाशिवादि-शब्दसमन्वयेन सदाशिवादीनां ब्रह्मत्वमन्तरैवोपपन्नाः ॥

(२३३) नच नारायणादिशब्दानामेव सदाशिवे समन्वयेन सदाशिवस्यैव परब्रह्मत्वं कुतो नेति शङ्क्यम्, नारायणशब्दे श्रूयमाणस्य णत्वस्य संज्ञायामेव विहितत्वेन सदाशिवादिषु नारायणशब्दस्य संज्ञात्वा-भावेन तत्र तच्छब्दसमन्वयानुपपत्तेः ॥

**(२३४) अद्वैत० – "एतेन – 'ध्येयः सदा सवितृ-मण्डलमध्यवर्ती नारायणः' इत्यपि व्याख्यातम् । इदं हि नारा-यणशब्दबोध्यत्वं ब्रह्मणो न बोधयति । न चात्रेदं वाक्यं प्रमाणम् ॥"**

**समीक्षा** – एष श्लोकः गायत्रीध्यानार्थं पुराणादिषु विनियुक्तः । गायत्रीप्रतिपाद्यं परं ब्रह्मैवेति सम्प्रतिपन्नम् । अत इदं पद्यं नारायणशब्द-बोध्यत्वं ब्रह्मणः साधु साधयति । अतएव श्रीमन्नारायणस्य दशावतार-महिमवर्णनैकपरश्रीमद्भागवतस्य गायत्रीव्याख्यानरूपत्वं गारुडे 'गायत्री भाष्यरूपोऽसौ वेदार्थपरिबृंहितः । पुराणानां साररूपः साक्षाद्भागवतो-दितः ॥' इत्यनेन सुस्पष्टं समुद्घोष्यते ॥

**(२३५) अद्वैत० – "वस्तुतस्तु–'अथातो ब्रह्मजिज्ञासे'ति सूत्रे भाष्ये च व्यापकपरविष्णुपदेनैव ब्रह्मणो निर्देशो न**

**नारायणपदेन।** विष्णुनारायणपदयोरपर्यायत्वम्। **नच विष्णुशब्दो नारायणपदपर्यायः; अन्यथा 'ब्रह्म-विष्णु-शिवात्मिकामि'ति विष्णुपुराणे ब्रह्मशिवसमानत्वं विष्णोः प्रतिपाद्यमानं कथमुपपद्यते? तत्र विष्णुपदम्, नारायणपदं वा ब्रह्मपर्याय इति हि– 'प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्। वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मशब्दितम् ॥' इति ब्रह्मशब्दमात्रबोध्यत्वप्रतिपादनमन्यथा नोपपद्यते। 'विष्णुर्नारायणः कृष्णः'इति निघण्टुर्लोकप्रसिद्धमानुपस्वरूपमभिप्रेत्य, न त्वौपनिपदं तत्त्वमाश्रित्य; अमरकोशकारस्य जैनमतावलम्बिनस्तत्र प्रामाणिकत्वानवसायात्। यदेव स्वरूपं भगवता श्रीकृष्णेनापि नारायणावतारेण" –**

**समीक्षा –** सूत्रभाष्ये यतो नारायणप्रसादमृते न मोक्षः– इत्यत्र ब्रह्मशब्दस्य नारायण एवार्थः–इति ज्ञापनात्–विष्णुपदेनैव ब्रह्मणो निर्देशः, नतु नारायणपदेनेति अग्रमर्भकाभिनिवेश एव ॥

(२३६) किञ्च विष्णुपदं हि नारायणपदपर्यायभूतम्। आपामरपण्डितविश्रुतमिदम् अपलपन् भवान् न स्तोकमपि संकुचति?

(२३७) अन्यच्च "ब्रह्मविष्णुशिवात्मिकाम्" इत्यस्य ऐक्यवाचकशब्दस्य समानार्थकत्वं कथं ब्रूते भवान्? अस्माकन्तु पूर्वोक्तदिशा ब्रह्मशिवान्तर्यामिरूपेण विष्ण्वाख्यरूपेण च नारायण एव सृष्ट्यादीनि विधत्ते–इति राद्धान्तः ॥

(२३८) अपरञ्च अमरकोषस्य शक्तिग्राहकता सर्वसम्प्रतिपन्ना, भाष्यकारादिभिरभियुक्तैस्तत्र तत्र प्रमाणत्वेन तद्वचनोद्धरणात् । तद्वचनानादरणे तस्याहितमतावलम्बित्वं यद् हेतूक्रियते तत् तस्यान्यतरपक्षपातवैधुर्यं समर्थ्यमानमस्माकमेव साधकम् । नच 'वसुदेवोऽस्य जनकः' इति वाक्यशेषबलात् 'विष्णुर्नारयणः कृष्णः' इति निघण्टुर्लोकप्रसिद्धं मानुषस्वरूपमभिप्रेत्य, न त्वौपनिषदं तत्त्वमाश्रित्येति वाच्यम्; 'वेदैश्च सर्वैरहमेव वेद्यः' इति तस्यैव वसुदेवपुत्रत्वेन ख्यातस्य औपनिषदतत्त्वत्वसिद्धेः । "अवजानन्ति मां मूढाः" इति वाक्यं कृष्णस्य मानुषत्वं जल्पतां युष्मादृशानां 'मूढ' इत्युपाधिमुपहरति–इति युष्मदुदाहृतं तद् गीतावाक्यं युष्माकमेव प्रतीपम् ॥

(२३९) अद्वैत० – "एतेन – 'स एव ब्रह्मशब्दार्थो नारायणपदोदितः' इति तत्रौंकारव्याख्यामिषेण नहि नाम्नि विप्रतिपत्तिरित्युक्तिरपि – परास्ता । नारायणपदस्य नाराणां गुणानां अयनम् , अराणां दोषाणामनयनम् , नारसमूहवेद्यत्वात् तेषामयनम्, आपो नाराः तासामयनमित्याद्यर्थाः सर्वेऽपि मायोपहिततन्नियामक-सविशेषसदाशिवादितत्तत्पुराणावगतसकलजगत्कारणसर्वशब्दवाच्यस्वरूपपरत्वेन, वेदवेद्यत्वेन, अद्वितीयब्रह्मपरत्वेन, आदिसृष्टिकालीनरजस्तमोगुणाधिकमायोपहितस्रष्ट्रवस्थसंहारावस्थरुद्रमात्रस्यैव विष्णुपुराणादौ नारायणशब्दवाच्यत्वप्रतिपादनेन कोशेन मानुषावस्थमात्रकृष्णपरत्वस्यावगमेन च द्वैता-

भिमतब्रह्मस्वरूपमेव नारायणपदार्थ इति न सम्प्रतिपन्नम्, 'अथातो ब्रह्मजिज्ञासे'त्यत्र श्रुतिविशेषेण नारायणस्यैवात्रब्रह्मत्वात् ॥''

**समीक्षा** – अस्मिन् वाक्यपुञ्जे–'अर्थाः सर्वेऽपि' इत्यस्य क्वाप्यन्वयादर्शनात् वाग्डम्बरोऽयं सावहेलमुपेक्ष्यतामेवार्हति ॥

(२४०) **अद्वैत० –''नारायणपर्यायानन्तेश्वरशब्दानाम्, किं बहुना ? नारायणपदस्याप्युपलक्षणं ब्रह्मपदमिति तु तुल्यन्यायेन 'ध्येयस्सदा शम्भुराकाशमध्ये' इत्यादिश्रुत्यनुसारेण सदाशिव-गणेश-स्कन्द-दुर्गादिपदानामप्युपलक्षणमित्यापत्त्या ब्रह्मस्वरूपस्य नियतस्य सूत्रेऽसूत्रणाच्च नोपपद्यते, इति सर्वानुगतमेकमद्वितीयमेव मायोपहितरूपेण, निर्विशेषरूपेण च प्रत्यगभिन्नमत्र सूत्र्यत इति वक्तव्यम् ॥''**

**समीक्षा**–अत्र 'ध्येयः सदा शम्भुराकाशमध्ये' इति श्रुतौ उक्तस्य ध्येयस्य इतरव्यावर्तकशम्भुशब्दोऽपि पूर्णानन्दत्वनिमित्तकयोगेन नारायणमेवाभिधत्ते इति । एवमेव स्कन्दसदाशिवदुर्गादिपदान्यपि समन्वयाध्यायोक्तविधया नारायणपराण्येवेति एतेषां सर्वेषाम् जीवसामान्यस्य जिज्ञास्यत्वव्यावर्तकतया उपलक्षणभूतः ब्रह्मशब्द इत्येतदस्माकं सम्मतमेवेति 'दुर्गादिपदानामपि उपलक्षणं स्यात्' इत्यापत्तिरिष्टापत्तिरेव ॥

(२४१) **अद्वैत०–''अत एव 'अयमात्मा ब्रह्म' 'आत्मेत्ये-**

**वोपासीत', 'आत्मा वा अरे द्रष्टव्यः''आत्मा वा इदमग्र आसीत्', 'तस्माद्वा एतस्माद्वात्मन आकाशः संभूतः' 'अनेन जीवेनात्मनाऽनुप्रविश्य', 'स आत्मा तत्त्वमसि श्वेतकेतो' इत्यादिप्रत्यगभेदपराणि उपपद्यन्ते ॥**

**समीक्षा –** इमानि सर्वाण्यपि श्रौतवाक्यानि अद्वैतप्रस्थानप्रक्रियया अवाच्यं परमार्थतत्त्वं यदि बोधयन्ति तर्हि जघन्यवृत्त्यैव– इत्यद्वैतेऽस्वरसान्येवेमानि वाक्यानीत्यविप्रतिपन्नमेव ॥

(२४२) किञ्च 'अयमात्मा ब्रह्म' इत्यत्र इदं पदं केवलप्रत्यक्षसिद्धं न बोधयति किन्तु प्रमाणसिद्धमेव । अत एव 'जन्माद्यस्य यतः' सूत्रशाङ्करभाष्ये अस्येति–'इदम्पदस्य प्रमाणसिद्धबोधकत्वं' प्रतिपन्नम् । तथा च 'अयमात्मा' इत्यस्य पूर्वशास्त्रप्रकृतः परमात्मा ब्रह्म परिपूर्णः – इत्यर्थः पर्यवस्यति।'आत्मेत्येवोपासीत'-'आत्मा वा अरे द्रष्टव्यः-'इति श्रुत्योरुपास्यतया आत्मनः कथनेन उपास्यस्य च भवन्मते मिथ्यात्वेन पारमार्थिकप्रत्यगभेदपरत्वं न युज्यते । किन्त्वात्मशब्दस्य "यच्चाप्नोऽति यदादत्त यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावः तस्मादात्मेति भण्यते ।।" इति निरुक्त्यनुरोधेन अत्रत्यात्मशब्दः व्यापकत्वाद्यर्थक एव, नतु स्वात्मपरः। 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति वाक्यं वियदादिप्रपञ्चकारणत्वं बोधयत् जीवात्मव्यावृत्तमात्मानमेव व्यवस्थापयति । 'अनेन जीवेने'त्यादिवाक्यं व्याख्यातचरम् । 'स आत्मा तत्त्वमसि' इति वाक्ये च छान्दोग्यशाङ्करभाष्योक्तदिशा 'तत्त्वम्' इत्यखण्डं पदम्, तथा च

श्वेतकेतो तत्त्वं=यथार्थस्वरूपम्, असि इत्यर्थस्यापि अक्लिष्टतयैवोपपन्नत्वेन न प्रत्यगभेदपरत्वमस्यापि सिद्ध्यति ॥

(२४३) अद्वैत०—"नृसिंहतापिन्युपनिषत्तु स्पष्टं जगत्कारणं वस्तुगत्याऽद्वितीयं निर्विशेषं प्रतिपादयति, इति न ब्रह्मशब्दोऽत्र नारायणतात्पर्याभिप्रायमात्रेण, नारायणपदस्यापि तत्तत्प्रकरणानुसारेण तत्तत्स्वरूपमात्रपरत्वेन नामरूपविशेषानियन्त्रितब्रह्मस्वरूपमेवात्र ब्रह्मपदार्थः ॥"

**समीक्षा**— अत्र युष्माभिः नामरूपविशेषानियन्त्रितं निर्विशेषमित्युच्यते, अतो नृसिंहतापिन्युपनिषदः स्पष्टतया निर्विशेषत्वप्रतिपादकत्वं दिवास्वप्नैकलभ्यम्, यतो नामरूपविशेषाभ्यामेव प्रतिपाद्यस्यावगमः स्पष्टतया शक्यसम्भावनः ॥

(२४४) अद्वैत० — पुरुषसूक्तप्रतिपाद्योऽपि सदाशिव एव, अथवाऽद्वितीयं ब्रह्मेति तु शिवार्कमणिदीपिकादौ व्यक्तम्, इति सर्ववेदप्रतिपाद्यत्वमपि न नारायणपदमात्रप्रतिपाद्यस्य; अन्यथा पुरुषपदेन पुरुषसूक्तसमाख्यसूक्तेन च ब्रह्मणः प्रतिपादनं कथमुपपद्येत ? तत्र हि 'स ब्रह्मः स शिवः स हरिरि'ति नारायणपर्यायहरिशब्दस्य पुरुषांशत्वप्रतिपादनम्, किं बहुना ? 'वृष्णीनां वासुदेवोऽस्मि' 'रामः शस्त्रभृतामहम्' इति वासुदेवादीनामपि ब्रह्मविभूतित्वप्रतिपादनम् ॥"

**समीक्षा** – 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवम्' – इति समाख्यसूक्तेन पुरुषसूक्तप्रतिपाद्यो नारायण एवेति सिद्ध्यति ॥

(२४५) अपरञ्च भवताऽपि 'स ब्रह्म स शिवः स हरिः' इति वाक्यमुदाहृत्य पुरुषस्य त्रिमूर्त्तिस्वरूपत्वमेवाभिधीयते । एवं स्थिते पुरुषसूक्तप्रतिपाद्यः सदाशिव एवेति कथं स्वोक्तिविरुद्धं लपति भवान् विशङ्कम् ? अस्माकन्तु, ब्रह्मशिवादि शब्दानां ब्रह्मशिवादिशब्दवाच्य-परतया न विरोधः ॥

(२४६) किञ्च पुरुषसूक्तप्रतिपाद्यमद्वितीयं ब्रह्मेति युष्मदुक्तं नोपपद्यते, 'उतामृतत्वस्येशानः' इत्यनेन मुक्तनियामकत्वकथनेन मुक्ता-वपि सद्वितीयत्वाम्नानात् । न चामृतत्वस्येत्यस्य देवत्वस्येत्यर्थः, भागवते 'अमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् ।' इति पुरुषसूक्तव्याख्यानदर्श-नात् । तत्राभयत्वविशेषणेन – भीषोदेति सूर्यः–इति श्रुतिसिद्धभयादि-विशिष्टदेवतापरत्वं व्यावर्तितम् ॥

(२४७) अद्वैत० –

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥
तमेव शरणं गच्छ सर्वभावेन भारत ।

इति 'तमेव' शब्देन भगवता स्वातिरिक्तस्येश्वरस्य ध्येयत्व-विज्ञेयत्वादिप्रतिपादनं च नारायणपदमात्रवाच्यस्यैव परमात्मत्वे विरुध्येत ॥"

**समीक्षा** – अत्र तमेवेति शब्देन स्वातिरिक्तस्य ईश्वरस्य विवक्षा यदि भगवतः–तर्हि उपसंहारे 'मामेकं शरणं व्रज' इति स्वकृतं विधानं विरुद्धयेत ॥

(२४८) किञ्च "स आत्मा तत्त्वमसि श्वेतकेतो" इत्यत्र 'स आत्मा' इति कथनेन श्वेतकेतोरनात्मत्वमेव स्यात् ॥

(२४९) अद्वैत० - **"तत्र सांख्यमतनिराकरणं न केवलमद्वैतिनः, किन्तु द्वैतव्यतिरिक्ताः सर्वेऽपि ब्रह्मसूत्रभाष्यकाराः कुर्वते,** इति साङ्ख्यमतनिराकरणस्य सर्वात्मना ब्रह्मसूत्रेष्वनादरणं **द्वैतिनां न समादरमर्हति तथा च 'ब्रह्मजिज्ञासे' ति प्रस्तुतं जिज्ञासा-कर्म प्रधानं ब्रह्मैव जिज्ञास्यं मत्वा तदविरोधिनाम्, तदुपकारकाणां च सगुणब्रह्मविचारकाणाम्, अन्येषां च प्रसक्तानां जिज्ञासाऽ-द्वैतमतेऽप्युपपन्नैव ॥"**

**समीक्षा** – अत्र द्वैतिभिरपि 'रचनानुपपत्तेश्च' इत्यनेन सांख्य-मतनिराकरणं कृतमेवेति प्रसभमाहार्योऽयं दोषारोपस्तेषु । नैतावता ब्रह्मण एवोपादानत्वापत्तिः । स्वातन्त्र्येण प्रकृतेरुपादानत्वं सांख्योक्तमसंगत-मित्युक्त्वा अस्वातन्त्र्येणोपादानत्वस्य प्रकृतौ समर्थितत्वात् ॥

(२५०)अद्वैत० – **"तत्रातश्शब्दम् - 'ज्ञानी प्रियतमोऽतो मे तं विद्वानेव चामृतः' इत्यनुव्याख्यानं व्याचष्टे । तेन च ज्ञानस्य मोक्षसाधनत्वं विवक्ष्यत इति न्यायसुधा । न चैतदपि**

विप्रतिपन्नम्, परं तु तत्र तस्य मुक्तिहेतुत्वं साक्षादज्ञाननिवृत्ति-रूपदृष्टफलद्वारेत्यद्वैतिनः; ईश्वरप्रसादरूपादृष्टद्वारेति तु द्वैतिनः, तत्र च दृष्टे संभवति नादृष्टकल्पनेति न्यायस्य बाधः प्रधानं बाधकम्। 'उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।' इति ज्ञानिनः स्वात्मस्वरूपत्वं बोधयन् गीताचार्यस्तु–"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।" इति वार्तिकार्थं प्रत्यभिज्ञापयति। न तत्र केवलं साधनत्वम्, किन्तु फलत्वमपि ज्ञानस्य, परन्तु रूप-भेदेन प्रमाणजन्यत्वेन, सिद्धब्रह्मस्वरूपेण चेति स्वीकार एवोप-पद्यते;अन्यथाऽदृष्टविधया ज्ञानस्य मोक्षसाधनत्वे कर्मणैव बन्ध-निवृत्तिरिति मीमांसकसिद्धान्तेनोपपत्तौ धर्मजिज्ञासातः पृथग् ब्रह्ममीमांसा, किं बहुना? ब्रह्मस्वरूपमपि न प्रामाणिकं स्यात्॥"

**समीक्षा** – अत्र अद्वैतिनां मते अज्ञाननिवृत्तिद्वारा ज्ञानस्य मुक्तिहेतुत्वं यदभ्यधायि, तत् स्वसिद्धान्तविरुद्धम्, यतो हि अद्वैतमते अविद्यानिवृत्तिरेव मुक्तिः–'अविद्यास्तमयो मोक्षः सा संसार उदाहृतः॥' इति तद्वचनात्॥

(२५१) किञ्च 'दृष्टे सम्भवति नादृष्टकल्पना' इति न्यायस्य बाधे द्वैतसिद्धान्तस्योपरि आपादिते युष्मन्मतेऽपि गङ्गास्नानेनादृष्टफल-मनभ्युपगमनीयमापद्येत, यद् नास्तिका एवानुमन्येरन्॥

(२५२) अपरञ्च युष्मन्मते ज्ञानफलभूताज्ञाननिवृत्तिः अदृष्ट-

रूपैव । अज्ञाननिवर्तकात्मसाक्षात्कारस्य चरमसाक्षात्कारत्वात् । अज्ञान-निवृत्तिसाक्षात्कारेऽङ्गीकृते अज्ञाननिवर्तकसाक्षात्कारस्य चरमत्वं न स्यात्। इति स्वन्यायविरोधः स्वस्कन्धमेवाधिरूढः ॥

(२५३) अन्यच्च मोहनिवृत्तेरात्मरूपत्वाङ्गीकारात् आत्मनो नित्यसिद्धत्वेन मोहनिवृत्तेः फलत्वमेव दुःसम्पादम् । नच ज्ञातत्वेनोपलक्षितस्यात्मनः मोहनिवृत्तित्वाङ्गीकारात् मोहनिवृत्तेः फलत्वं सुघटम्—इति वाच्यम्, ज्ञातत्वेनोपलक्षितत्वं नाम ज्ञातत्वारोपाधिष्ठानत्वमेव भवताऽङ्गीकृतम् , २८५ तमे पृष्ठे यथा शुक्तेरुपलक्षणम् , इति कथनात् । तथा च ज्ञातत्वारोपस्य सर्वभ्रमनिवर्तकज्ञानदशायामसंभवेन आरोपस्येदानीमेव वक्तव्यतया ज्ञातत्वारोपधिष्ठानभूत आत्मा इदानीमेव सिद्ध इति तद्रूपमोहनिवृत्तेः फलत्वासंभवात् ॥

(२५४) अन्यच्च अत्र ज्ञानस्य साधनत्वं फलत्वं च विरुद्धम्, तदुपपादकः 'प्रमाणजन्यत्वेन सिद्धब्रह्मस्वरूपेण च' इत्युक्तः रूपभेदोऽप्येकत्र विरुद्धः ।

(२५५) किञ्च यच्च—अदृष्टविधया ज्ञानस्य मोक्षसाधनत्वे कर्मणैव बन्धनिवृत्तिः स्यात्—इत्यापादनं तन्न युक्तम्, कर्मणैव बन्धनिवृत्तेः शास्त्रविरुद्धत्वात अदृष्टद्वारा ज्ञानस्य मोक्षसाधनत्वे बहुतरप्रमाणसद्भावात् मोक्षस्य अदृष्टसाध्यत्वे कर्मजन्यस्वर्गादिफलस्य अनित्यत्ववत् मोक्षस्याप्यनित्यत्वं स्यात् इति यद्यभिप्रेयते तर्हि ज्ञानसाध्यत्वेऽपि मोक्षस्यानित्यत्वापादनं सममेव, यत् साध्यं तदनित्यम् इति नियमात् । ननु ध्वंसरूपत्वाद्

मोक्षस्य यद् जन्यं तदनित्यम् इति नियमस्य ध्वंसेतरविषयत्वात् न दोष इति चेत् अदृष्टसाध्यत्वेऽपि बन्धनिवृत्तिरूपमोक्षस्य ध्वंसरूपत्वादेव अनित्यत्वापादनं सुपरिहरमिति सन्तोष्टव्यम् ॥

(२५६) अन्यच्च 'ज्ञानी त्वात्मैव मे मतम्'–इति वाक्यं तवैव बाधकम्, 'तत्वमसि श्वेतकेतो' इत्यत्राज्ञानिन एव श्वेतकेतोर्ब्रह्माभेद-बोधनस्याद्वैतराद्धान्तत्वात् अत्र पुनः 'ज्ञानी तु' इत्यत्र तुशब्देनाज्ञानि-व्यावर्तनपूर्वकं ब्रह्माभेदेऽभिधित्सिते कथं नु ते हानिर्न स्यात् ?

(२५७) किञ्च–'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।' इति पूर्वार्धेन स्वभिन्नत्वात्यन्तप्रियत्वं कथयित्वा तदुत्तरार्धे एव कथम-भेदं ब्रवीत ? तर्हि उत्तरार्धस्य का गतिरिति चेत् 'ममात्मा भद्रसेनः' इति वत् तत्र प्रियतमत्वमेव दिद्योतयिषितम् । यद्वा 'यच्चाप्नोती' त्युक्तचरवच-नानुसारेण ज्ञानी एव भगवन्तमाप्नोतीत्यर्थः । अत एव 'बहूनां जन्मना-मन्ते ज्ञानवान् मां प्रपद्यते' इति वाक्यशेषे तस्य विवरणं स्फुटम् ॥

(२५८) अन्यच्च–अद्वैतमते विशिष्टाभेदस्यानङ्गीकारेण चिन्मात्रे लक्षणैवेति तत्रेदं वाक्यमस्वरसमेव ॥

(२५९) अद्वैत० –"यमेवैष वृणुते तेन लभ्यः' इत्यपि भगवत्प्रीतिमात्रं मोक्षसाधनं बोधयति, नतु ज्ञानं तत्र हेतुरिति, इति तत्र कर्मणामपीश्वरप्रसादद्वारैव मोक्षसाधनत्वात् किं तद-

**तिरिक्तेन ज्ञानेन ? इतीश्वरप्रसादसिद्धिद्वारा ज्ञानमोक्षसाधनपरत्वे सर्वापि ब्रह्ममीमांसा कथं न निष्फला ?''**

**समीक्षा** – अत्र 'यस्य प्रसादात् परमार्तिरूपात् अस्मात्संसारान्मुच्यते नापरेण' इति श्रुत्यन्तरात् अत्रापि 'नायमात्मा प्रवचनेन लभ्यः न मेधया न बहुना श्रुतेन' इति पूर्वार्धात् मोक्षस्यानितरसाधनलभ्यत्वकथनपुरस्सरं भगवत्प्रसादैकसाध्यत्वकथनात्–प्रसादस्यैव मोक्षसाधनत्वं सुस्पष्टम् । नच 'नान्यः पन्था विद्यतेऽयनाय' इति ज्ञानातिरिक्तस्य मोक्ष–साधनत्वनिषेधश्रवणात् न प्रसादस्यैव मोक्षसाधनत्वमिति वाच्यम्, मुमुक्षुगतसाधनेषु ज्ञानस्यैव साक्षान्मोक्षसाधनत्वम् ; नान्यस्य, मोक्षसाधनस्य इच्छारूपप्रसादस्य भगवन्निष्ठत्वात् इत्येवंरूपेण सावकाशतयाऽविरोधात् । इदञ्च सुधायामेव स्पष्टीकृतम् ॥

(२६०) अपिच 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति ज्ञानस्य अत्यर्थभगवत्प्रीतिकरत्वाख्यानात् तत्प्रीतेः साफल्याय ज्ञानसाध्यार्थप्रसाद एव मोक्षसाधनम्–इत्यूरीकरणीयमेव । यत्तु कर्मणामपीश्वरप्रसादसाधनत्वेन ज्ञानस्य गतार्थत्वमाशङ्कितं तस्य कर्मलभ्यप्रसादस्य स्वर्गादिसाधनत्वेन ज्ञानस्यैव मोक्षसाधनात्यर्थप्रसादसाधनत्वात् न युक्तम् ॥

(२६१) अद्वैत० – "न च प्रमाणजन्यज्ञानस्य मोक्षसाधनत्वे विवादः, तस्यादृष्टविधया बन्धनिवर्तकत्वं न तु कुत्रापि

**दृष्टचरम् । रज्जुतत्त्वसाक्षात्कारेणाज्ञाननिवृत्तिर्दृष्टविधयैव, नादृष्ट-विधया । न च तत्र रज्जुतत्त्वसाक्षात्कारातिरिक्त ईश्वरप्रसादः, अन्यद्वा निमित्तम् ॥"**

**समीक्षा –** अत्र शास्त्रैकगम्यस्य लोके दृष्टचरत्वं न युक्तम्, नाप्यपेक्षितम्। अन्यथा निर्विकल्पकब्रह्मसाक्षात्कारस्य भ्रमनिवर्तकत्वं शास्त्रदृष्टमिति भवताऽङ्गीक्रियते, तच्च लोके जातुचिदपि न दृष्टपूर्वम्। प्रत्युत सविकल्पकसाक्षात्कारस्यैव बाधकत्वं दृष्टम्, तथा च दृष्टविधया ज्ञाने बन्धनिवर्तकत्वस्य क्वाप्यदृष्टचरत्वात् भवदङ्गीकारे निर्विकल्पक-ब्रह्मसाक्षात्कारे बाधकत्वस्यापि दत्ततिलाञ्जलित्वापत्तेः ॥

(२६२) किञ्च– "यथा दृष्ट्या प्रसन्नः सन् राजा बन्धापनोदकृत्। एवं दृष्टः स भगवान् कुर्याद् बन्धविभेदनम् ॥" इत्युक्तरीत्या राजदर्शनजन्यप्रसादेन निगडबन्धनिवृत्तेर्लोकदृष्टत्वात् अदृष्टचरत्वा-पादनमप्यनुपपन्नम् ॥

(२६३) अद्वैत० – **"यस्य प्रसादात् परमार्त्तिरूपाद् अस्मात् संसारान्मुच्यते नापरेण' इति प्रसादस्याज्ञाननिवृत्ति-मोक्षोपयोगित्वम्, सत्यम्, प्रतिपादयति। तत्र प्रसादो नामा-वरणनिवृत्तिमात्रम् ॥"**

**समीक्षा –** अत्र प्रसादशब्दस्यावरणनिवृत्तिमात्रमिति अर्थ-कथनं किम्प्रमाणकम्? एवं निरर्गलार्थकथने कः कमर्थं न साधयेत्?

(२६४) किञ्चात्र 'मुच्यते' इत्यनेन आवरणनिवृत्तेः कथितत्वेन 'प्रसादात्-मुच्यते' इत्यनयोः पदयोरसम्बद्धार्थकत्वं स्यात् । ननु 'अत्र परमार्तिरूपात् संसारात्' इति कथनेन आर्तिनिवृत्तिरेव मुच्यते इत्यस्यार्थ इति चेत्, 'अविद्यासहकार्येण नासीदस्ति भविष्यति' इत्यद्वैतिसिद्धान्तानुसारेण अविद्यारूपावरणनिवृत्तिसमकालमेव कार्यरूपदुःखनिवृत्तेरपि भाव्यतया 'प्रसादात् मुच्यते' इति पञ्चम्यनुपपत्तिर्दुरुद्धरा ॥

(२६५) अद्वैत० – "**तत्र भक्तिरपि साधनमिति तु न विप्रतिपन्नम् । भक्तेः प्रसादद्वारा मोक्षसाधनत्वं तु तन्निबन्धनसाक्षात्कारद्वारा तत्साधनत्वाभिप्रायम् । अत एव– 'भक्त्या मामभिजानाति', 'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी'– इत्यादिस्मृतयो भक्तेर्ज्ञानसाधनत्वमुपपादयन्त्यः सङ्गच्छन्ते ।।**"

**समीक्षा –** 'भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ।।' इतिवाक्येन भगवत्प्रवेशरूपमोक्षार्थमपि भक्तेरावश्यकताख्यानेन 'भक्त्या मामभिजानाति' इति वाक्यमपि तदनुसारेणैव व्याख्येयम् । भक्त्या ज्ञानम् तेन च पक्वभक्तिः, तया च दर्शनम्, तेन च क्रमेण पक्वतरा पक्वतमा च भक्तिः, तया चात्यर्थप्रसादः, तेन च मोक्षः । न चैतेन 'नान्यः पन्था' इति ज्ञानेतरसाधननिषेधविरोध इति वाच्यम्; माहात्म्यज्ञानपूर्वकप्रेमप्रवाहस्यैव भक्तिरूपत्वेन भक्तिर्ज्ञानाविनाभूतैवेति विरोधस्यानुन्मेषात् । इदञ्च सुधियां व्यक्तमेव ॥

(२६६) अद्वैत०—"एतेन- 'भक्त्यैव तुष्टिमभ्येति विष्णुः' इति वचनमपि— व्याख्यातम् ; तेन हि सविशेषब्रह्मोपासनमपि श्रवणादिकमिव निर्विशेषब्रह्मसाक्षात्कारेऽन्तरङ्गसाधनमित्येवाव-गम्यते । तदुक्तम् – 'ईश्वरानुग्रहादेव पुंसामद्वैतवासना' 'वशीकृते मनस्येषां सगुणब्रह्मशीलनात् । तदेवाविर्भवेत् साक्षादपेतोपाधि-कल्पनम् इति ॥' 'कर्मणा त्वधमः प्रोक्तः' इति तु काम्यकर्मा-भिप्रायम् , न तु सात्त्विककर्माभिप्रायम् ; तस्य ज्ञानसाधनत्वेना-धमत्वानापदकत्वात् ॥"

**समीक्षा** – ईश्वरः भक्तान् अनुगृह्य अद्वैतवासनामुत्पाद्य स्वीयमीश्वरत्वमेव हापयति इत्यहो ! ईश्वरस्य बालिश्यम् अद्वैतमते । यत्तु "कर्मणा त्वधमः प्रोक्तः' इत्यत्र कर्मपदं काम्यकर्माभिप्रायम् , नतु सात्त्विककर्माभिप्रायम् । तस्य ज्ञानसाधनत्वेन अधमत्वानापादकत्वात् ।" इत्यभाणि तत्तु तत्प्रमाणाविमर्शनिबन्धनम्—"तत्र कर्मणा त्वधमः प्रोक्तः प्रसादः श्रवणादिभिः । मध्यमो ज्ञानसम्पत्त्या प्रसादस्तूत्तमो मतः ॥" इति श्रवणादीनां ज्ञानसाधनत्वेऽपि मध्यमप्रसादसाधनत्वकथनवत् ज्ञान-साधनसात्त्विककर्मणामधमप्रसादसाधनत्वमुपपन्नमेव ॥

(२६७) अद्वैत०— "वस्तुतस्तु– 'अथशब्दोक्तार्थहेतुत्व-समर्थनार्थं खल्वतःशब्दः । न चाथशब्दार्थ ईश्वरभक्त्यानन्त-र्यम्, येन तत्साधनत्वं प्रसादद्वारा समर्थयितुम् – अतःशब्दः-स्यात्; अन्यथाजिज्ञासासाध्याया भक्तेः जिज्ञासातः प्रागेव सिद्ध्यै

**जिज्ञासा वितथा स्यात् । न च भक्तिर्जिज्ञासासाधनम्, किन्तु तत्फलम्, इति कथमीश्वरप्रसादहेतुत्वमतःशब्दार्थः स्यात् ॥"**

**समीक्षा** – अत्र अथशब्दोक्तार्थहेतुत्वसमर्थनार्थम् 'अतः'शब्द इत्ययुक्तम् । आनन्तार्यबोधकेनाथशब्देनैवानन्तर्यप्रतियोगिनो हेतुत्वस्य सिद्धेः । नच सिद्धेऽपि हेतुत्वे सत्यां विप्रतिपत्तौ अतःशब्देन समर्थन मावश्यकमिति वाच्यम् ; जिज्ञासाकर्तव्यत्वरूपसाध्ये प्रतीयमानान्वयस्यातःशब्दस्याथशब्दार्थेऽन्वयायोगात् । अतःशब्दस्त्वथशब्देनोक्तं केवलं परामृशेत्, नतु समर्थयेत् । वस्तुतस्तु अतःशब्दः–जिज्ञासाशब्दोक्तविचारस्य कर्तव्यत्वं यावन्तमर्थं विना नोपपद्यते तावतः सर्वस्यैव बोधकः । अन्यथा जिज्ञासाकर्तव्यत्वसमर्थनोपयोग्यर्थजातबोधकशब्दान्तराभावात् सूत्रस्य न्यूनता स्यात् । प्रकृते जिज्ञासाकर्तव्यत्वसमर्थनार्थं निष्फले प्रवृत्त्ययोगात् किञ्चित् फलं वक्तव्यम् । अप्रामाणिकस्यार्थस्य जिज्ञासायोगात् ब्रह्मणि वेदस्य प्रामाण्यं तदुपयोगि सिद्धे व्युत्पत्त्यादिकं वक्तव्यमेव । अथशब्देन अधिकारानन्तर्यमात्रस्यैव कथितत्वेन उर्वरितार्थजातस्यातःशब्देनैव बोधनीयत्वात् ॥

(२६८) किञ्चाद्वैतमतेऽपि अथशब्दस्य शमदमादिसम्पत्त्यानन्तर्यरूपोऽर्थो विवक्षित एव । अत्र शमो नाम 'शमो मन्निष्ठता बुद्धेः' इति भागवतवचनात् भक्तिविशेषरूप एव । तस्मात् ईश्वरभक्त्यानन्तर्यस्य अथशब्दार्थत्वनिराकरणं स्वसिद्धान्तविरुद्धम् । तथा जिज्ञासासाध्यभक्तेः जिज्ञासासाधनत्वं कथमिति अन्योन्याश्रयोद्भावनम् उक्तरीत्याऽद्वैतिनमेव

लक्ष्यीकरोति । अस्माकं मते तु प्रागुक्तदिशा पक्वपक्वतरपक्वतमेत्यादिभक्तिवैविध्येन किञ्चिद्भक्तेः जिज्ञासासाधनत्वं किञ्चिद्भक्तेश्च जिज्ञासासाध्यत्वमपि युज्यते । इदमपि सुधायां व्याकृतमेवेति तद्दर्शिनां न तिरोहितम् ॥

(२६९) अद्वैत० – **"द्रव्यकर्मगुणकालस्वभावजीवादीनामीश्वरानुग्रहकार्यत्वं तु तदुत्पत्तौ तस्य कारणत्वमात्रेण । न चैतावता ज्ञानमात्रेणेश्वरप्रसादं विना मोक्षसिद्धिविरोधः । तस्यैव मोक्षदत्वादिकमपि तदुपयुक्तज्ञानोत्पादनद्वारेणेत्यनुपदमेवोक्तम् ॥"**

**समीक्षा –** अत्र द्रव्याद्युत्पत्तौ ईश्वरानुग्रहस्य कारणत्वकथनं बाधितम्, प्रकृतिरूपद्रव्यकालजीवादीनामनादित्वेनोत्पत्त्यभावात् ॥

(२७०) किञ्च 'यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ।' इत्यन्वयव्यतिरेकाभ्यां द्रव्यादिसत्ताया एव ईश्वरानुग्रहप्रयोज्यत्वं कथ्यते । नचानादितत्सत्ताया ईश्वरानुग्रहप्रयोज्यत्वं कथमिति शङ्क्यम्; सन्ध्यावन्दनाद्यनुष्ठानेन अनादिभूतस्यापि प्रत्यवायप्रागभावस्य संरक्षणात् अद्वैतमतेऽनादेरपि जीवब्रह्मविभागस्याविद्याधीनत्वदर्शनात् ॥

(२७१) अद्वैत० – **"तत्र स्वतो न किञ्चित्करत्वमित्यनेनाविद्याया अनादेरपि महदाद्याकारेण परिणामस्वभावायाः स्वप्रकाशमात्राध्यस्तरूपाया एव कार्यकारित्वं विवक्ष्यते, न स्व-**

तन्त्राया इत्यत्राद्वैतिनो न विप्रतिपद्यन्ते । अत एव साक्षिभास्यत्वम् , तदध्यासेन तत्सत्त्वादिकं च तत्रापि ।।''

**समीक्षा** – यदि अविद्या स्वप्रकाशचैतन्याध्यस्ततामात्रेण महदाद्याकारेण परिणममाना अवतिष्ठते तर्हि बाधपर्यन्तं तन्निवृत्तेरसम्भवात् प्रलयो न स्यात्, सा च तदाऽपि परिणममानैवावतिष्ठेत । अतः पृथक् स्वतन्त्रेश्वरेच्छाऽप्यावश्यक्येव ॥

(२७२) अद्वैत० –''स्वप्रकाशचैतन्यस्वरूपमपि विना न मायोपाधिमीश्वरतां भजते, येन तदिच्छयैवोपाधेरपि जीवावा(?)रकत्वं स्यात् । यथा हीश्वरो मायोपधाननिमित्तात्मलाभः, एवं जीवोऽपि तदवस्थाविशेषोपाधिप्रयुक्तम्, तत्कार्यान्तःकरणोपाधिप्रयुक्तं वाऽऽत्मानं लभते ।।''

**समीक्षा** – हन्त भोः ! ईश्वरमपि सृजन्त्या माययैव जगत्सृष्ट्यादौ ईश्वरकार्ये सम्भवति, मायामन्तरा च नसम्भवति सति, किमनेनान्तर्गडुना ईश्वरेणाद्वैतिनाम्? तथा च निरीश्वरसांख्यपथ एवानुसृतः॥

(२७३) अद्वैत० – ''अन्तर्यामित्वमपि तस्य तत्तदधिष्ठानतामात्रेणेति तदधीनसत्ताप्रतीतिविषयत्वादिप्रयुक्तमेव तदधीनत्वम् । नतु स्वरूपतः कस्यापि कार्यस्य तदधीनत्वम् । इदमेवाभिप्रेत्य 'तेन विना तृणमपि न चलती'ति केनोपनिषन्न्यायविषयः ।।''

**समीक्षा** – अत्र तत्तदधिष्ठानतामात्रेण तत्तदन्तर्यामित्वं यदि स्यात् तर्हि रजतारोपाधिष्ठानशुक्तेः रजतान्तर्यामित्वं लोके व्यवहार-विषयतां भजेत । अन्तर्यामित्वं हि अन्तःस्थित्वा व्यापारेषु प्रेरणम् । तत् शुक्तौ न संभवति चेत् अधिष्ठानमात्रभूते प्रेरणादिव्यापारशून्ये निर्विशेषेऽपि अन्तर्यामित्वासम्भवस्तुल्य एव ॥

(२७४) किञ्च तेन विना तृणमपि न चलतीति न्यायः कथमपि अद्वैतसिद्धान्ते न संभवति, अधिष्ठाने निर्विशेषब्रह्मणि चलनासंभवात् । अध्यस्तेऽपि स्वतश्चलनाभावात् अधिष्ठानचलनप्रयुक्तचलनस्याप्यसंभवात् केनोपनिषन्न्यायः मोघीकृत एव ॥

(२७५) **अद्वैत० – "स्वतन्त्रेच्छत्वे त्वीश्वरस्य वैषम्य-नैर्घृण्यदोषप्रसङ्गः । तत्तत्कर्माधीनफलदानेन तत्परिहारे तु किमन्तर्गडुनाऽप्रयोजिकया अजागलस्तनायमानया च तदिच्छा-या (?) ॥"**

**समीक्षा** – उपोद्घातपृष्ठे ११३ "येनापि केनापि हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ।' इति नीतिशरणोऽयं निबन्धा–'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥' इति वचनानुसारं भगवदेकवशस्तदाज्ञानुसारमत्रावतीर्णो 'वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शनमि'ति न्यायेन स एव स्व-कर्मानुसारं सर्वं प्रवर्तयतीति तदेकनिर्भरः " इत्यादि विलप्य साम्प्रत-

मेतत्प्रतीपं व्याहरमाणो व्याहतभाषी कथं न भवेद् धीमान् ? एतावतेदं निर्गलति केवलं मुग्धजनविप्रलिप्सया आस्तिकजनव्यवहारमभिनयन् प्रत्यक्षसिद्धस्यापि मिथ्यात्वं गदन् भवान् प्रत्यक्षसिद्धमनपलपन्तं नास्तिकं लोकायतमतिशेते इति भवदुत्तरार्थं प्रवृत्ताः क्वचित् तानि तानि वाक्यकदम्बानि अनुवादेनापि प्रत्यवायजनकानि अनुवदन्तो वयं 'कथाऽपि खलु पापानामलमश्रेयसे यतः' इति माघवचनं प्रतिसन्धाय नूनं बिभीमः ॥

(२७६) अद्वैत० – **"आवरिकाया अविद्याया अन्धकारस्येवावृतस्वरूपप्रकाशमात्रानिवर्त्यत्वेनावृतस्वरूपेण कुत्रापि निवृत्त्यदर्शनात् ॥"**

**समीक्षा** – क्षेत्रे उप्तं बीजं गोमयाद्यावृतम् यथाकालमङ्कुरात्मना परिणममानं स्वावरणमुद्भिद्य उद्गच्छति–इति दर्शनात् आवृतस्वरूपेण कुत्रापि निवृत्त्यदर्शनोद्घोषणं भवतो लोकव्यवहारमुग्धत्वं स्फुटं प्रकाशयति। अङ्कुरोद्गमनमूष्मसहकारेणेति यदि मन्यते भवान् तर्हि प्रकृतेऽपि प्रसन्नस्येश्वरस्य शक्त्यैवावरणनिवर्तकत्वमस्तु ॥

(२७७) अद्वैत० – **"बन्धनिवृत्तिद्वारं हीश्वरप्रसादः इति न युक्तम् । सत्यम् , निगडबन्धादौ प्रभोरिच्छया बन्धनिवृत्तिर्दृश्यते, परं तु स बन्धः सत्यः, व्यावहारिकश्च । निगडबन्धस्य प्रभुनिमित्तत्वाच्च तत्र तथा । मिथ्याबन्धनिवृत्तिस्तु तत्त्वज्ञाना-**

रात् । यच्च तूलाविद्यादौ अद्वैतदृष्ट्या व्यभिचारोद्भावनं तत् निर्वह्नि-धूमविशिष्टं स्थलं स्वकल्पितमादाय वह्निमान् धूमात् इत्यत्रापि व्यभिचारोद्भावनसमानयोगक्षेमम् । रजतभ्रमस्थले शुक्तित्वविषये आवरणभूतभाव-रूपाज्ञानाभावेऽपि चाकचक्यादिसादृश्यदोषेणैव शुक्तित्वज्ञानप्रतिबन्धेन रजतभ्रमोपपत्तेः भावभूतानाद्यविद्यावरणाकल्पनस्य वैयर्थ्येन रजतभ्रमोप-पादकतया तस्या असिद्धेः, प्रमाणान्तराभावाच्च ॥

(२८१) किञ्च, यत् अनिर्वचनीयत्वासिद्धेरकिञ्चित्करत्वकथनं तत् तुच्छम् ; भवता अनाद्यज्ञानं निवर्तते, अनिर्वचनीयत्वात् तूला-ज्ञानवत् इति प्रकरणसममपि इत्युक्तत्वेन प्रकरणसमानुमाने हेतोः अनि-र्वचनीयत्वस्यास्माभिरनङ्गीकारेण असिद्धेः एकपक्षेऽपि दूषणत्वेन प्रकरण-समस्य दुर्घटत्वापत्तेः ॥

(२८२) अद्वैत० समीक्षा – **न चानादेर्निवृत्तिः अभाव-वैलक्षण्यमात्रेण आत्माविद्यासम्बन्धादौ व्यभिचारात्** ' अविद्याया इव आत्माविद्यासम्बन्धस्यापि पक्षत्वाङ्गीकारात् व्यभिचारानुत्थितेः ॥

(२८३) अद्वैत०– समीक्षा – **अज्ञानमिव तन्निवृत्तिरपि अनिर्वचनीयैव, इति न तत्र व्यभिचारः** ' अत्र भवदुक्तज्ञाननिव-र्त्यत्वसाधकानिर्वचनीयत्वरूपहेतोः अज्ञाननिवृत्तौ सत्त्वाभ्युपगमेन कण्ठतः व्यभिचाराङ्गीकारात् पुनः 'तत्र न व्यभिचारः' इति कथनं मम जिह्वा नास्तीत्यस्य सगर्भ्यम् ॥

(२८४) अद्वैत० – "वस्तुतस्तु–निवृत्तेरप्यविद्याया इव मिथ्यात्वरूपाय (?) निवृत्तिस्त्रीकाराद् न तत्र साध्याभावः ॥"

**समीक्षा** – अत्र १४१ तमे पृष्ठे 'निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः' इत्युदाहरणेन अज्ञाननिवृत्तेरात्मरूपत्वाङ्गीकारावगमात् अत्र पुनरज्ञाननिवृत्तेः निवृत्तिस्वीकारे आत्मनोऽपि निवृत्त्यापत्त्या नैरात्म्यवादप्रवेशात् अपसिद्धान्तापत्तिः ।

(२८५) अद्वैत० –"न चात्मनि निर्धर्मके भावत्वाभावाद् भावाभावत्वैलक्षण्यम्; भावत्वे धर्मिसमसत्ताकत्वविशेषणेनाविद्यावैलक्षण्यात्, आत्मनि तन्यूनसत्ताकभावत्वस्यारोपितस्याङ्गीकारात्, अविद्यायां भावत्वस्यारोपितत्वेऽपि तत्समसत्ताकत्वात् ॥"

**समीक्षा** – हा हन्त! भोः किमिदमाचरितम्? भावत्वे धर्मिसमसत्ताकत्वविशेषणे तु आत्मसत्तासमसत्ताकभावत्वस्य निर्धर्मकात्मन्यसंभवात् भवदुक्तानुमानस्यानैकान्त्यं भवतैव समर्थितं किल?

(२८६) किञ्च अविद्यायामपि तत्सत्तासमसत्ताकभावत्वस्य विद्यमानत्वेनासिद्धिरपि स्वानुमानस्य भवतैव समर्थिता खलु ॥

(२८७) अद्वैत० – "एतेन–अज्ञानम्, ज्ञाननिवर्त्यम्, अनिर्वचनीयत्वात्; शुक्त्याद्यज्ञ(?)ज्ञानवदिति विशेषानुमानेन, अज्ञानम्, न ज्ञाननिवर्त्यम्, अनादित्वात् इति सामान्यशास्त्रस्य

**'पदे जुहोति' इति शास्त्रेण 'आहवनीये जुहोती'ति सामान्यशास्त्रस्य पदहोमातिरिक्तविषयकत्ववत् सामान्यविशेषविषयकत्वप्रयुक्तबलाबलनिर्णयेनानिर्वचनीयेतरानादिज्ञानानिवर्त्यत्वे पर्यवसानमपि व्याख्यातम्; अनिश्चिताप्रामाण्यकसामान्यविशेषप्रमाणयोरेव विशेषशास्त्रेण सामान्यशास्त्रस्य संकोचात् ॥''**

**समीक्षा** – अत्र 'अज्ञानं निवर्तते' इति विशेषविषयकस्य अप्रामाण्यनिश्चयात्, सामान्यविशेषभावे 'पदे जुहोति' इत्यादिनियमसमकक्षतादौर्लभ्यात् । तथाहि—अज्ञानं निवर्तत इत्यत्र अनुमानं प्रमाणम्, उत श्रुतिः ? आद्ये त्वस्य केवलयुक्तित्वे हेयत्वमेव । श्रुत्युपजीवकत्वे पुनः प्रथमं श्रुतिरेवोपस्थापनीया । नच 'विश्वमायानिवृत्तिः'–'मायामेतां तरन्ति ते', 'तरन्त्यविद्यां विततताम्'–इत्यादिश्रुतिस्मृतयः तत्र प्रमाणानि इति वाच्यम्, 'तस्याभिद्ध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः' – इति वाक्ये अभिद्धायनपदोदितभगवदुपासनेनैव मायानिवृत्तिश्रवणात्, उपासनस्य च भवन्मते मिथ्यार्थविषयकत्वेन मिथ्याज्ञानेन मायानिवृत्त्यसम्भवात् । 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्यत्रापि शरणागतिरूपप्रपत्त्यैव मायानिवृत्तिसरणात्, प्रपत्तेश्च स्वस्वामिभावविषयकत्वेन भेदज्ञानरूपतया भवन्मते तस्य मिथ्याज्ञानत्वेन मायातरणासम्भवात् । 'तरन्त्यविद्यां विततताम्' इत्यत्र विततपदेन अविद्याया अपरच्छिन्नत्वकथनात् युष्मन्मते अपरिच्छिन्नस्य सत्यत्वनियमात् अविद्यायाः सत्यतापत्त्या सत्यस्य निवृत्तेरद्वैतिभिरनभ्युपगमात् अविद्यानिवृत्तेः दुरुपपादत्वात् एतच्छ्रुतिस्मृत्युदाहरणेना-

भीष्टासिद्धेः । अज्ञानं निवर्तेत इति विशेषनियमः धूमिपर्वतो निरग्नक इति विशेषनियमवत् युष्मद्राद्धान्ते अप्रामाणिक एव पर्यवस्यति –इति । यदि तस्याभिध्यानात् इति वाक्ये ईश्वरोपासनबोधकाभिध्यानपदेन तज्जन्यनिर्गुण–साक्षात्कारो लक्षणया विवक्ष्यते, तस्य च मायानिवर्तकत्वमुपपन्नमेव इत्यभिधीयते तर्हि भवान् सगुणोपासनं निर्गुणसाक्षात्कारं जनयतीत्यत्र प्रमाणं किमपि स्पष्टमाचष्टाम् ॥

(२८८) किञ्च सगुणोपासननिर्गुणसाक्षात्कारयोः विरुद्धविषयकयोः कार्यकारणभावोऽप्यसम्भवदुक्तिक एव ॥

(२८९) अद्वैत० –"ब्रह्मविदामविद्यानिवृत्तिर्यद्यपि तत्साक्षात्कारमात्रेणैव; तथाऽपि यावत्प्रारब्धसमाप्ति तत्संस्कारमात्रात्मना दग्धपटवत् तत्रानुवृत्तिः प्रारब्धमात्रोपादानाज्ञानलेशमात्रतया यावच्छरीरपातम्, इत्युपदेशकत्वमपि तेषां जीवन्मुक्तानाम्, नित्यजीवन्मुक्तानां मृत्युब्रह्मादीनामिव स्थितप्रज्ञानामुत्थितावस्थायाम्, इति नोपदेशानुपपत्तिः; अप्रामाण्यज्ञानानास्कन्दित–पटुतमसंस्कारसहित–भ्रमव्याप्यभुज्यमानादृष्टाभावसहित एव हि साक्षात्कारः सर्वात्मनाऽज्ञाननिवर्तकः; श्रुतिप्रामाण्यात् ॥"

**समीक्षा** – अत्र ब्रह्मसाक्षात्कारित्वेन युष्मदभिमतानां उपदेशकानां शंकराचार्यप्रभृतीनां स्वीयसाक्षात्कारः अप्रामाण्यज्ञानास्कन्दित एवेति तदप्रामाण्यशङ्कानिरोधानेन शिष्यान्प्रति इदमित्थमेवेति सावधारणोपदेशकता 'मनस्यन्यद् वचस्यन्यद् कर्मण्यन्यद्' ...... इति

नीतिपथं स्मृतिपथमानयति । यदि तेषामप्रामाण्यज्ञानानास्कन्दितब्रह्मसाक्षात्कारोऽभविष्यत् तदा ते शिष्यान् नोपादिक्षन्, असम्भवात् ॥

(२९०) अद्वैत० – **"भूयश्चान्ते विश्वमायानिवृत्ति'–रिति सति शरीरपाते सर्वावरणनिवृत्तिश्रुतिविरोधेनावरणविशेषानुवृत्तिप्रमाणिकी(?)। नचेश्वरशक्तेरप्यावरणत्वे किमपि प्रमाणम् ; अन्यथा तेनैवेष्टसिद्धयाऽविद्याख्यावरणस्वीकारवैयर्थ्यम् । ईश्वरशक्तेर्नित्याया नित्यावरणत्वे नित्यबन्धप्रसङ्गेन न कोऽपि मुक्तः स्यात्, इति मुक्तिवाद एव विमुक्तः स्यात् । न तन्निवर्तकं किमपि प्रामाणिकम् । नवा नित्यायास्तस्या निवृत्तिरपि; 'परमेश्वर एव सत्त्वादिगुणमय्या विद्याविरोधिन्याऽविद्यया प्रकृत्याऽचिन्त्यया, अद्भुतया च स्वशक्त्या जीवस्य स्वप्रकाशचैतन्यस्वरूपमाच्छादयति, इति प्रकृत्यतिरिक्तावरणशक्तिस्वीकारः किम्प्रयोजनः ?"**

**समीक्षा**– अत्र ब्रह्मसाक्षात्कारेण विश्वमायानिवृत्तिकथनं गङ्गास्नानेन सर्वपापक्षयः इतिवत् 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इतिवच्च भूमाभिप्रायेणोपपन्नम् । गङ्गास्नानमात्रेण यदि सर्वपापनिवृत्तिः स्यात् तर्हि सद्यो मुच्येत । यदि च ब्रह्मज्ञानेनासंकुचितसर्वकर्मनिवृत्तिः- तर्हि "भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते" इति सूत्रोक्तः ब्रह्मज्ञानिनः भोगैकनिवर्त्यः प्रारब्धकर्मविशेषो न स्यात् । तत्र गङ्गास्नानादौ सत्यपि पुनः पापावशेषस्य प्रामाणिकत्वेन यदि संकोचः समाद्रियते, तर्हि

अत्रापि 'ज्ञानिनां मोक्षदश्च सः' 'आनन्ददश्च मुक्तानां स एवैको जनार्दनः' इति मोक्षदानात् पृथगानन्ददानकथनान्यथानुपपत्तिरेव प्रमाणं मन्यताम् ॥

(२९१) किञ्च— "न ऋते त्वत्क्रियते किञ्चनारे" इति श्रुत्या ईश्वरशक्तिं विना मायाया आवरकत्वासम्भवावगमात् सुतरामीश्वरशक्तेः आवरकत्वं प्रामाणिकं पर्यवस्यति । यच्चैवं सति तेनैवेष्टसिद्ध्या अविद्यारूपावरणस्य वैयर्थ्यापादनं तत् अचिन्त्येश्वरलीलानवबोधविजृम्भितम् । यतः सर्वसमर्थ ईश्वरो जगत्सृष्ट्यादौ प्रकृत्यादितत्त्वानि तदभिमानिदेवताश्च लीलयैव द्वारतया गृह्णातीत्यविप्रतिपन्नोऽर्थः श्रुतिपुराणादिसिद्धः । यच्च नित्याया ईश्वरशक्तेः नित्यावरणत्वे बन्धनित्यताप्रसङ्गेन न कोऽपि मुक्तः स्यादित्यापादनं तत् ऐश्वर्याः प्रपञ्चसृष्टिशक्तेर्नित्यत्वे प्रलयो जातुचिदपि न स्यात् इत्यापादनसमानयोगक्षेमम् ॥

(२९२) किञ्च विश्वमायानिवृत्तिरित्यत्र सर्वावरणनिवृत्तिरिति भवताऽपि व्याख्यातम् । इत्थञ्च भूयास्यावरणानि भवताऽप्यभ्युपगतानि । एकेनैवावरणेन भवदुक्तभङ्ग्या स्वप्रकाशचैतन्याच्छादनसंभवे इतराण्यावरणानि किम्प्रयोजनानि ? श्रीमानेवाभिदधातु ॥

(२९३) अद्वैत०— **"मुक्तानामप्यानन्दांशमात्रस्य तारतम्येनावरणनिवृत्तिरपि कुतः ? भक्तितारतम्येन प्रसादतारतम्यम्, तेनानन्दतारतम्यमिति कल्पनायामानन्दमीमांसायाम्— 'स**

एको ब्रह्मण आनन्दः' इत्येतत्पर्यन्तं 'श्रोत्रियस्य चाकामहतस्ये'-त्येकस्यैव वाक्यस्य कथमभ्यासः । 'भोगमात्रसाम्यलिङ्गाच्चेति' भगवदानन्दसाम्यप्रतिपादनं कथमन्यथा नयनमर्हति ?॥"

**समीक्षा** – अत्र साधनतारतम्यात् फलतरतमतां भवान् अङ्गीकुरुते नवा ? आद्ये आनन्दस्य तारतम्येनावरणनिवृत्तिरङ्गीकृतैव । द्वितीये सानधतारतम्यस्य वैयर्थ्यमापद्येत । आनन्दवल्याः 'भोगमात्रसाम्यलिङ्गाच्च' इति सूत्रस्य चार्थविशेषं जिज्ञासमानो भवान् आनन्दतीर्थभगवत्पादभाष्यं गुरुमुखात् अवगच्छतु ॥

(२९४) अद्वैत०–"भोगेन त्वितरे क्षपयित्वा ततः सम्पद्यते' इति प्रारब्धकर्मणां मोक्षप्रतिबन्धकत्ववचनं कुतः? यदि तत्रापीश्वरशक्त्यैव प्रतिबन्धः, तर्हि सर्वत्र तयैव बद्धेषु सञ्चितागामिकर्मस्वपि सत्सु मोक्षप्रतिबन्धाप्रतिबन्धनिर्वाहे कर्मणां सतामप्यकार्यकारित्वात् 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' इति कुतः ? ज्ञाने सत्येवेश्वरप्रसाद इति बोधनार्थं तदिति चेत्, ज्ञानाग्निरित्यग्निपदं किमर्थम् ? न ह्यग्निर्लोके ईश्वरप्रसादद्वारैव दहति, तच्छक्तिं वा कार्यकारितायामपेक्ष्यते(?)अन्यथा सर्वत्र तयैव निर्वाहे विनाऽपि ज्वालाम्, इन्धनादिना वा दाहः स्यात्, कथं वा जलस्यापि न दाहकत्वमीश्वरशक्त्यैव ? ईश्वरशक्तिरियमीश्वरनिष्ठा कथमग्नेर्दाहकत्वादाहकत्वयोर्नियामिका ? मणिमन्त्रादिना दृष्टेन दाहप्रतिबन्धादिकं च कुतः ? अत ईश्वरस्य सर्वकारणत्वमभिप्रान-

**विधयैवेत्यत्रैव सर्वकारणत्वाज्ञानम्, तदप्यावृतस्यैव, न त्वना-वृतस्वरूपस्य ॥"**

**समीक्षा** – अत्र प्रारब्धकर्मणो मोक्षप्रतिबन्धकत्वम् ईश्वर-शक्त्यैवेत्यङ्गीकारे–तयैव सत्स्वपि सञ्चितागामिकर्मसु मोक्षप्रतिबन्धो निर्वाह्यताम्–इत्यापादने युष्मन्मते सर्वमविद्याधीनमिति प्रारब्धकर्म-णोऽपि प्रतिबन्धकत्वं यद्यविद्याधीनं तर्हि सत्स्वपि सञ्चितागामिकर्मसु तयैव प्रतिबन्धः कुतो न स्यादित्यापादनं न स्यात् किम् ?

(२९५) किञ्च ज्ञानबाध्यस्थले शुक्तिरजते ज्ञानेन भस्मी-भावादर्शनात् प्रकृते सर्वकर्मणां ज्ञानेन भवता बाधाङ्गीकारे 'भस्मसात् कुरुतेऽर्जुन'–इत्यत्र 'भस्मसात्' इति व्यर्थं स्यात् । यदि श्रीमता अग्निपदप्रयोगेणेश्वरप्रसादानपेक्षता शङ्क्यते तर्हि 'भस्मसात्' इति प्रयोगेण ज्ञानबाध्यत्वं कर्मणां नात्राभिप्रेतमिति कुतो न तर्क्येत ? यच्च जलस्यापि न दाहकत्वमीश्वरशक्त्यैव कुतो न इति पृष्टं तत्र अद्वैतसिद्धान्ते सर्वाधिष्ठा-नभूते ब्रह्मणि आरोपितयोरग्निजलयोरुभयोरप्यविशेषेण औष्ण्यं वा शैत्यं वा कुतो न स्यात् ? अधिष्ठानवैलक्षण्याभावात् । लोके हि अधिष्ठान-वैलक्षण्ये हि अध्यस्तवैलक्षण्यम् : इत्यत्र यत् समाधानमुत्पश्यति भवान् तदेवात्रापीत्यवैतु । यच्च ईश्वरनिष्ठा ईश्वरशक्तिरियं कथमग्नेर्दाहकत्व-नियामिका ? इत्यनुयुक्तम्, तत्र तर्हि भवान् मन्त्रशक्त्याऽग्नेरदाहकत्वं कथं समादधीत ? लौकिकेऽप्यर्थे कुतोऽयं दिग्व्यामोहः ?

(२९६) अद्वैत० – **"मणिमन्त्रादिप्रतिबन्धवादोऽपि कथं न उपचरितार्थः? ईश्वरशक्तेरेव सर्वत्र प्रतिबन्धकत्वाविशेषात्॥"**

**समीक्षा –** अत्र मणिमन्त्रादिप्रतिबन्धकवादस्योपचरितार्थत्वे वीजाभावः, ईश्वरशक्तेः प्रतिबन्धकत्वेऽपि मणिमन्त्रादिद्वारैव तस्याः प्रतिबन्धकत्वात्। इयन्तु अपर्यनुयोज्या शास्त्रसिद्धा भगवल्लीला। नच प्रारब्धकर्मप्रतिबन्धकत्ववादस्यापि तुल्ययुक्त्योपचरितार्थत्वं न स्यादिति वाच्यम्, वैषम्यात्। तथा हि सत्यां सामग्र्यां यद्वशात् कार्यानुत्पादः तत् तस्य प्रतिबन्धकम् इति हि प्रतिबन्धकस्य लक्षणम्। तच्च मणिमन्त्रादावस्ति, प्रारब्धकर्मणि च नास्ति। ज्ञानोत्तरकाले प्रारब्धकर्मवतः मोक्षजनकपरिपूर्णप्रसादे सति अचेतनास्वतन्त्रकर्मणः स्वतन्त्रभगवत्प्रसादजमोक्षप्रतिबन्धकत्वं न घटते। परिपूर्णप्रसादासत्त्वेऽपि मोक्षजनकप्रसादरूपसामग्र्यभावादेव मोक्षाभावोपपत्तौ तस्य मुख्यप्रतिबन्धकत्वकल्पनायोगात्। मणिमन्त्रादौ न तथा, तत्र दाह्यदाहकाग्निसमवधानकाले असति मणिमन्त्रादौ दाहो भवत्विती्च्छायाः सत्त्वेऽपि मणिमन्त्रादिसमवधाने दाहप्रतिबन्धात् प्रतिबन्धलक्षणाक्रान्तत्वेन प्रतिबन्धकत्वावश्यकत्वात्॥

(२९७) अद्वैत० – **समीक्षा – 'एतेन मुक्तावपि आनन्दवृद्धिह्रासौ परिहृतौ'**–इति यदवोचि तत् न साम्प्रतम्; "ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु। आनन्दो ह्रसतेऽकार्यात् शुभं कृत्वा तु वर्धते॥' इति ब्रह्माण्डवचनविरोधात्॥

(२९८) अद्वैत० — "तदधीनाज्ञाननिवृत्त्युपलक्षिताखण्डाकारवृत्त्युपलक्षितात्मस्वरूपो मोक्षः फलम् । तच्चाविद्यातन्निबन्धनसम्बन्धाधीनबन्धस्य बाध्यत्वं विना न भवति इत्यार्थं बन्धमिथ्यात्वमत्र सिद्ध्यति ॥"

**समीक्षा** — ईदृशस्यानन्दाद्यनुभवगन्धविधुरस्य तार्किकाभिमतमोक्षस्येव पुमर्थतैव न सम्भवति इति भवद्व्याकृतरूपस्य मोक्षत्वमेव न सम्प्रतिपन्नम्, अप्रामाणिकञ्च तत् । तस्मादीदृक्षमोक्षोपपादकतया बन्धमिथ्यात्वस्यार्थिकार्थत्वकथनं सति कुड्ये चित्रं कर्मेति न्यायपराहतम् ॥

(२९९) अद्वैत० — "एतेन— प्रथमप्रतीतमर्थमुल्लंघ्य चरमप्रतिपन्नमार्थिकमर्थमेवोपपादयन् कथमकुशलो न स्यादिति परास्तम्; आर्थिकस्याप्यर्थस्य प्रथममुपन्यासस्तु- 'आशीर्नमस्क्रिया-वस्तुनिर्देशो वाऽपि मङ्गलम् ।' इति वचनोपक्षिप्तवस्तुनिर्देशात्मकमङ्गलाचरणम्, सर्वशास्त्रार्थस्य संगृह्य निरूपणेन प्रेक्षावतां विचाराभिमुखीकरणं चोपलक्ष्य । प्रसिद्धं हि तत्र तत्र मङ्गलेन भाव्यर्थसूचनद्वाराऽपि मङ्गलाचरणं सर्वेषु महाकाव्येषु श्राव्येषु, दृश्येषु च, इत्यथशब्देन सूत्रसूचितसर्वशास्त्रविषयप्रयोजननिरूपणमपि मङ्गलाचरणार्थमेव ॥"

**समीक्षा**—अत्र भामत्यादिव्याख्याकारैः अध्यासभाष्यस्य वस्तु-

निर्देशात्मकमङ्गलमाचरति इत्यवतरणिकाया अदानं किन्निबन्धनम्? सर्वत्र व्याख्यातृभिः मङ्गलाचरणस्य मङ्गलमाचरति इत्यभिधाय प्रतीकोद्धरणदर्शनात्। अभिनवमिदम् अभिदधत् भवान् नूनमद्वैताचार्याणामभिनन्दनीयः॥

(३००) किञ्च भावत्कसकलशास्त्रार्थरूपवस्तुनिर्देशस्य मङ्गलाचरणत्वमेव गगनकुसुमसौरभायितम्। तथाहि मङ्गलाचरणं हि विघ्ननिवर्तकव्यापारः, प्रकृते च संविन्मात्ररूपस्य वस्तुतोऽप्रतिपाद्यस्य युष्मन्मतरीत्याऽपि मिथ्याभूतस्य प्रपञ्चमिथ्यात्वस्य च निर्देशः कथं तावत् मङ्गलम्? अन्यथा शुक्तिरजतादिनिर्देशानामपि मङ्गलाचरणत्वं स्यात्; अविशेषात्॥

(३०१) किञ्च 'व्यासोपदिष्टसूत्राणां द्वैतवाक्यात्मनां शिवे।' इति भवदभिमतप्रमाणेन द्वैतस्यैव सकलशास्त्रार्थत्वसिद्ध्या अध्यासभाष्यस्य सकलशास्त्रार्थनिरूपणपरत्वकथनं न युक्तम्॥

(३०२) अद्वैत० – "'तरति शोकमात्मवित्' इत्यादिश्रुतयो हि ज्ञानेनैवाविद्यानिवृत्तिद्वारा मुक्तिमुपदिशन्ति। ज्ञानं तु निवर्तकमज्ञानस्य, तत्प्रयुक्तस्य चाऽनिर्वाचनीयस्यैव मिथ्याभूतस्य। निवृत्तिशब्देन चात्र कारणात्मता विवक्ष्यते; तथैव शुक्तिरूप्यादौ दर्शनात्॥"

**समीक्षा** – अत्र हि शुक्तिरूप्यस्य अधिष्ठानसाक्षात्कारे सति

कारणात्मता नैव प्रत्यक्षेण दृश्यते । तस्मात् सा अनुमेयैव । तच्च अनुमानं न सम्भवति । असदेव रजतं प्रत्यभात् इत्युत्तरकालीनानुभव-बाधात् । अनेनानुमानेन शुक्तिरूप्यस्यासत्त्वसिद्धेः ; असतश्च कारणा-भावात् । तथा च ज्ञानन्तु निवर्तकमज्ञानस्य तत्प्रयुक्तस्य वा अनिर्वचनी-यस्यैव मिथ्याभूतस्य इति तावकीननियमे शुक्तिरूप्यादेरदृष्टान्तत्वात् तन्नियमस्यैवाप्रामाणिकत्वेनासिद्धया एतन्नियममुपजीव्य बन्धमिथ्यात्वं साधयितुं भवान् नेष्टे ॥

(२०३) किञ्च अनिर्वाच्यस्य अज्ञानमिथ्यात्वस्य च अप्रा-माणिकत्वं न्यायसुधायां 'अज्ञानमिथ्यात्वं कफोणिगुडायितम्' इत्यादि-वाक्येन कथितमपि भवता तत्र प्रमाणान्यनुदाहृत्याज्ञानतत्कार्ययोः मिथ्यात्वं सिद्धवत्कृत्य स्वगोष्ठीनिष्ठान्येव वाक्यजालानि मुधाऽऽम्रे-डितानि ॥

(२०४) अद्वैत० – **"नहि कुत्रापि सत्यस्याधिष्ठानतत्त्व-साक्षात्कारनिवर्त्यत्वं दृष्टचरम् । तत्र गरुडो न सर्पस्या-धिष्ठानम् , सर्पो वा न तदज्ञान-तत्कार्यान्यतरः ॥"**

**समीक्षा** – अद्वैत० १६० तमे पृष्ठे 'मिथ्यात्वं हि स्वाधि-ष्ठानज्ञानबाध्यत्वं' इति भवता वक्ष्यते, अतो बन्धस्य मिथ्या-त्वमनङ्गीकुर्वाणं प्रति बन्धः मिथ्या, अधिष्ठानतत्त्वसाक्षात्कारनिवर्त्यत्वात् इत्युक्तौ हेतुसाध्ययोरैक्यापत्त्या हेत्वसिद्धेः; बन्धमिथ्यात्वसाधनार्थं

ज्ञाननिवर्त्यत्वमात्रं हेतूकर्तव्यम् । तच्च गरुडज्ञाननिवर्त्ये सत्ये विषे वर्तत इति व्यभिचारात् ज्ञाननिवर्त्यत्वहेतुना बन्धमिथ्यात्वं साधयितुं न भवान् क्षमेत ॥

(३०५) **अद्वैत० – "विरोधिज्ञाननिवर्त्यमज्ञानं तत्प्रयुक्तं वेति तु निष्कर्षः। तत्र विरोधिपदं गरुडज्ञानादिव्यावर्तनार्थम्, अज्ञानविषयाश्रयसंविन्मात्रज्ञानव्यावर्तनार्थं च ॥"**

**समीक्षा –** अत्र गरुडज्ञानव्यावर्तनार्थं विरोधिपदं चेत् विषस्य गरुडज्ञानमविरोधीति भवानङ्गीकुरुते इति समपद्यत। तथा च विषस्य गरुडज्ञाननिवर्त्यत्वं न स्यात् ॥

(३०६) किञ्च संविन्मात्रज्ञानस्य कस्याप्यनिवर्तकत्वेन भवदभ्युपगतत्वात् 'ज्ञाननिवर्त्यत्वं यत्र तत्राज्ञानतत्कार्यान्यतरत्वम्' इति भवदूरीकृतव्याप्तेः संविन्मात्रज्ञानमादाय कुत्रापि व्यभिचारासंभवात् विरोधिपदेन संविन्मात्रज्ञानव्यावर्तनं व्यर्थम् ॥

(३०७) अपरञ्च विरोधित्वं नाम विरोधिविषयकत्वं चेत् संविन्मात्रस्य भवन्मते कस्याप्यविरोधित्वात् प्रमाणजन्यसंविन्मात्राकारवृत्तेः बन्धनिवर्तकत्वं न स्यात् ॥

(३०८) **अद्वैत० – "सेतुं दृष्ट्वा ब्रह्महत्यां व्यपोहति' इत्यत्रापि दर्शनपदेन सेतुदर्शनं तत्तन्नियमविशिष्टसेतुदेशपर्यन्त-**

गमनार्थपुरुषप्रयत्नसाध्यव्यापारविशेषः, तत्स्नानाद्यङ्गं विधेयमेव विवक्ष्यते। तत्राशक्तविषये नित्ये, नैमित्तिके वा कर्मणि लोपस्या-किञ्चित्करत्वात् शक्यनियमसहितं स्नानादिकमेव विवक्ष्यते, अन्यथाऽन्धानाम्, तिमिरदूषितानाम्, तद्दर्शनासमर्थानामन्ये-षाम्, किं बहुना– साम्प्रतिकानां सर्वेषामेव सेतुदर्शनासंभवात् श्रीरामेश्वरादियात्रा न पापविघाताय स्यात् ॥''

समीक्षा – अत्र सेतुदर्शनपदेन सेतुदेशपर्यन्तगमनार्थपुरुषप्र-यत्नसाध्यव्यापारविशेषस्यैव विवक्षितत्वे चक्षुष्मतां भूयसां सेतुदर्शनं वृथा स्यात्। अत्रेष्टापत्तौ अन्धानां रामेश्वरयात्रावैयर्थ्यं समापद्येत-इति त्विष्टापादनमेव नस्तत्॥

(३०९) अद्वैत० – "वैधं हि दर्शनं वस्तुगत्या न दर्शन-मपेक्षते, किन्तु दर्शनयोग्यताम्, इति दर्शनयोग्यदेशपर्यन्त-सेतुप्रदेशगमनमेव पूर्वोत्तराङ्गसहितमत्र दर्शनपदार्थः। तत्र तत्त-त्संख्याकं स्नानमप्युत्तराङ्गमिति न दोषः; यथा– चन्द्रसूर्योपरा-गादौ मेघादिनाऽऽवरणेऽपि दर्शनयोग्यकालिकजीवनमेव दर्शन-पदार्थः। न चैवं 'विद्वान्नाम-रूपाद्विमुक्तः' इत्यादिवाक्यगम्य-श्रवणादिसाध्यमधिष्ठानविषयं ज्ञानमसंभवि क्रियमाणेऽप्यपेक्षिते प्रयत्ने साधनसम्पन्नस्य, इति ज्ञानेन सत्यस्य निवृत्तौ नैकमप्युदा-हरणं शक्यनिर्देशम्। सेतुदर्शनादौ हि क्रियैव विधीयते, ज्ञानं तु

न विधेयम् , दर्शनपदं हि विधिनिषेधस्थले तद्विषयसंकल्पपरम् , नतु दर्शनपरम् ॥"

**समीक्षा** – अत्र दर्शनपदस्य दर्शनयोग्यतासंकल्पान्यतरपरत्वे 'आत्मा वा अरे द्रष्टव्यः' इत्यत्रापि दर्शनस्य वैधत्वात् स एवार्थोऽभ्युपगन्तव्यः स्यात् । तथा च बन्धस्यात्मसाक्षात्कारनिवर्त्यत्वासिद्धिरेव स्थापिता ॥

(६१०) अद्वैत० – "एतेन ध्वंसवत्त्वादेव बन्धस्य सत्यत्वम् , अन्यथा मिथ्याभूतस्यापि ध्वंसवत्त्वे शशविषाणादेरपि ध्वंसः स्यात् । न चैतदस्तीति परास्तम् । मिथ्यात्वं हि स्वाधिष्ठानज्ञानबाध्यत्वरूपं न शशविषाणस्यापि; तस्य निरधिष्ठानत्वात् , तज्ज्ञानाबाध्यत्वाच्च, इति बन्धस्य ध्वस्तस्य न सत्यत्वम् । न हि सत्यत्वं ध्वंसव्याप्यम् ; आत्मनि व्यभिचारात् , नापि व्यापकम् , दृष्टान्तासम्प्रतिपत्तेः । अज्ञानतत्कार्यान्यतरत्वमेव ध्वंसप्रयोजकम् । न चात्मा शशविषाणादिकं वोक्तान्यतरत्ववत् ; सदसद्विलक्षणत्वं वा ध्वंसप्रयोजकम् ; शुक्तिरूप्य–तदुपादानयोस्तथादर्शनात् , इति ध्वंसवत्त्वादेव मिथ्यात्वम् , इति बन्धः सत्यः, ध्वंसवत्त्वात् , इत्यनुमानस्य व्यतिरेकिणः, बन्धः, मिथ्या ध्वंसवत्त्वात्, यथा शुक्तिरूप्यादीत्यनेन विरोधः ॥"

**समीक्षा** – अत्र "ननु यथा मिथ्याभूतात् शशविषाणादेः

व्यावृत्तो ध्वंसः सत्ये पर्यवस्यति इति भवतोच्यते तथा सत्याच्चिदात्मनोऽपि व्यावृत्तो ध्वंसो मिथ्याभूते पर्यवस्यति–इति मयाऽपि वक्तुं शक्यत एव । सत्यम् , आपाततस्तथा, तथाऽपि– "सौत्री अर्थापत्तिः सन्देहास्कन्दिता कुण्ठितैव" इति सुधायां अर्थापत्तेः कुण्ठितत्वं यत् स्थापितं तन्न स्पृष्टमपि एतेन सुधापरीक्षकमानिना ॥

**(२११) अद्वैत० – " न च बन्धबाधमात्रं मुक्तिः, किन्तु तदुपलक्षितब्रह्मभावः, ज्ञानत्वोपलक्षितबन्धनिवृत्तिस्वरूप आत्मा वा 'तत्त्वमसि' 'ब्रह्मविद् ब्रह्मैव भवति' 'विमुक्तश्च विमुच्यते' 'तरति शोकमात्मवित्' इत्यादिश्रुतयः, 'आत्मा प्रकरणात्' 'एवमप्युपन्यासादविरोधं बादरायणः' 'विकारावर्ति च दर्शनात्' इत्यदिसूत्राणि चात्र मानम् ॥"**

**समीक्षा –** अत्र सुधायां "बन्धबाधः मुक्तिरित्याशंक्य नैवं श्रुतिसूत्रे वदतः" इत्यन्तेन दूषितम् । भवांस्तु "नच बन्धबाधमात्रं मुक्तिः, किन्तु तदुपलक्षितब्रह्मभावः, ज्ञातत्वोपलक्षितबन्धनिवृत्तिस्वरूप-आत्मा वा" इति मुक्तेः स्वरूपान्तरं ब्रूते । तच्च बन्धबाध एव पर्यवस्यति । भवन्मते ब्रह्मभावस्य नित्यसिद्धत्वेन आप्तव्यत्वाभावात् 'आप्तव्या मुक्तिः का?' इति पृच्छायां उपलक्षणीभूतबन्धबाध एवेत्यकामेनापि वक्तव्यम्, उपलक्षितस्य विशिष्टवत् पदार्थान्तरत्वाभावात् । तथा च 'बन्धबाधो मोक्षः' इति सुधाकाराशङ्कितपक्ष एव तावकीनोऽपीति तन्निषेधो न युज्यते । एवमुक्त एव 'अविद्यास्तमयो मोक्षः सा संसार

उदाहृतः ।' इति युष्मत्पूर्वाचार्यवचनाविरोधो युष्माभिः सम्पाद्येत ॥

(३१२) किञ्च तुष्यत्विति न्यायेन बन्धबाधोपलक्षितब्रह्मभावो मुक्तिरिति पक्षान्तरत्वेऽपि 'नैवं श्रुतिसूत्रे वदतः' इति सुधापादितं दूषणं तदवस्थमेवावतिष्ठते । यतः तत्त्वमसीत्यादिप्रमाणानि युष्मदभिप्रेतां मुक्तिं नैवाख्यान्ति । नच 'ब्रह्मविद् ब्रह्मैव भवति' इति ब्रह्मभावस्य नित्यसिद्धस्य फलत्वश्रवणात् तदुपपादकतया बन्धाबाधलक्षितब्रह्मभावो मुक्तिरित्येवार्थोऽत्र पर्यवस्यति इति वाच्यम्, ब्रह्मविद् इति ज्ञातृज्ञेय-भावेन भेदबोधनात् तदविरोधार्थं ब्रह्मैव भवति इत्यस्य ब्रह्मसदृश एव भवतीत्यर्थेनैव फलत्वोपपादनस्य औचित्यात् ॥

(३१३) अद्वैत०— समीक्षा — **'बन्धनिवृत्तिर्नाम तदुपादानाज्ञानेन सह बन्धस्य बाधः'** १५६ तमपृष्ठे **'निवृत्तिशब्देन चात्र कारणात्मता विवक्ष्यते, तथैव शुक्तिरूप्यादौ दर्शनात्'** इति भावत्कयोः वाक्ययोः एकत्र निवृत्तिशब्दस्य कारणात्मताविवक्षा, अन्यत्र च बाधार्थस्वीकारः इति विसंवादः स्पष्टः ॥

(३१४) अद्वैत०— **"तत्र प्रत्यक्षविरोधो न बन्धमिथ्यात्वस्य । तद्धि बन्धस्वरूपमात्रं गृह्णाति, न तु मिथ्यात्वाभावम् । 'सन् घटः' इत्यादिप्रत्यक्षं हि सत्तादात्म्यमेव घटादेर्गोचरयति, न तु बाध्यत्वाभावरूपं सत्त्वमपि ।।"**

**समीक्षा—** अत्र 'सन् घटः' इति सत्तादात्म्यभाने तादात्म्यप्रति-

योगिनः सतः अबाध्यरूपत्वेन घटे बाध्यत्वाभावो भात एव । अन्यथा 'नीलो घटः' इत्यत्र नीलतादात्म्ये भातेऽपि घटे नैल्यं न भाति इति स्यात्। अतः 'सन् घटः' इत्यत्र अबाध्यरूपसदधिष्ठानतादात्म्यभानेऽपि अबाध्यत्वरूपसत्त्वभानं घटे नास्ति इति व्याहरणं व्याहतं कथं न ? न चात्र-भेदसहिष्णुरभेद एव तादात्म्यं विवक्षितम् इति वाच्यम्, सन् घट इत्यत्र तादृशतादात्म्यभानानुभवाभावात्; प्रत्युत अभेदस्यैव भानानुभवात् ॥

**(३१५) अद्वैत० – "एतेन – घटोऽस्तीत्यादिप्रतीतिरपि – व्याख्याता, अस्तित्वस्य कालसम्बन्धरूपस्य मिथ्यार्थानां प्रतीति-समये सत्त्वाद् न तद् मिथ्यात्वविरोधि । शुक्तिरूप्यमस्ति, किं बहुना ? असदप्यस्तीति प्रतीतिविषयः, इति परैः स्वीकाराद्, न सत्तामात्रं बाध्यत्वविरोधि ; बाध्यत्वरूपमिथ्यात्वाभावो वा तत् ॥"**

**समीक्षा –** अत्र 'मिथ्यार्थानां प्रतीतिसमये सत्त्वात्' इत्ययं हेतुरेवासिद्धः । भवताऽत्र सत्त्वाङ्गीकारे त्रैकालिकस्य सत्त्वाभावरूप-बाधस्याङ्गीकारो नैवोपपद्येत । अतः अस्तित्वमिथ्यात्वप्रतीत्योरेव काल-भेदेनाविरोधः ; न त्वस्तित्वमिथ्यात्वयोः कालभेदेनाप्यविरोधः सुवचः ॥

(३१६) किञ्च 'असदपि अस्तीतिप्रतीतिविषय इति परैः स्वीकरात् न सत्तामात्रं बाध्यत्वविरोधि' इत्येतदत्यन्तासङ्गतम् । अस्माभिः (परैः) असतः अस्तीति प्रतीतिविषयत्वाङ्गीकारेऽपि तत्र अस्तित्वस्य

अनङ्गीकारात् । अस्तित्व-बाध्यत्वयोरविरोधसमर्थनार्थम् अयम् (परस्वीकारः) न किञ्चिदुपकरोति ते ॥

**(३१७) अद्वैत० – "वस्तुतस्तु – प्रतीतिकाले मिथ्यात्वेनानिश्चयदशायामेवास्तीति प्रतीतिः, न तु बाधदशायाम् तदनन्तरं वा। अस्तित्वं हि कार्यसामान्यस्य स्वरूपेण, नास्तित्वं तु कारणात्मना, अधिष्ठानव्यतिरेकेणाभावो वा, इति रूपभेदेन, अवस्थाभेदेन वाऽस्ति नास्तीति प्रतीतिविषयत्वं न व्याहन्यते। अस्ति-नास्त्युभयोदासीनं तु रूपं सदसद्विविलक्षणत्वेन शुक्तिरूप्यादौ बाधिते वर्तते। तद्धि सत्तादात्म्येनैव प्रतीयते। अस्तीत्यपि तत्परमेव। न चास्तित्वं मिथ्यात्वाभावश्चेत्यनर्थान्तरम् ॥"**

**समीक्षा–** अत्र अस्तिनास्तिप्रतीत्योरवस्थाभेदेन विरोधपरिहारे श्रुत्या युक्त्या वा बन्धस्य मिथ्यात्वसाधनप्रयासः वृथा स्यात्, यत इदानीमस्तीतिप्रतीतेर्दुरपह्नवत्वेन तद्विरोद्धनास्तीति प्रतीतेः भवतैवानभ्युपगमात्, मिथ्यात्वसाधनस्य नास्तीतिप्रतीतिरूपं फलम् इदानीं दुर्लभम्। बाधाभिमतदशायामपि संविन्मात्रविषयकनिर्विकल्पकसाक्षात्कारमात्रस्यैवाङ्गीकारेण नास्तीतिप्रतीतेः भवदुक्तविधयैव कालत्रयेऽप्यसंभवात् मुधाऽयं श्रमः। यतः कार्यात्मना उपलभ्यमानानां साम्प्रतं कारणात्मना नास्तित्वस्याविप्रतिपन्नत्वेन तत्साधने सिद्धसाधनतापत्तिः ॥

**(३१८) अद्वैत०–समीक्षा–"असत्यादपि सत्यार्थप्रतीतेरविरोधात्।"** सत्यार्थप्रतीतिः सद्विलक्षणा न वा ? नेति पक्षे आत्म-

मात्रसत्यत्वाङ्गीकारिणस्तवापसिद्धान्तः । आद्ये असत्यात् सद्विलक्षण-प्रतीतिः क्वापि संप्रतिपन्नदृष्टान्ते न दृष्टा । अतः "असत्ये वर्त्मनि स्थित्वा" इति केवलं स्वगोष्ठीव्याहरणीयकारिकोद्धारः विप्रतिपन्नं प्रति न किमपि साधयितुं क्षमते ॥

(३१९) **अद्वैत० — "नहि वन्ध्यासुतवचस इवापौरुषेयस्य वेदवाक्यस्यात्यन्तासत्त्वं मिथ्यात्वेऽपि ॥"**

**समीक्षा —** अत्र वेदवाक्यस्य मिथ्यात्वे वन्ध्यासुतवचस इव सद्विलक्षणत्वं भवताऽप्यङ्गीकृतमेव । तेन सद्विलक्षणत्वेनैव वन्ध्यासुत-वचस इव वेदवाक्यस्यासाधकत्वं प्राप्तमपरिहार्यमेव ॥

आनन्दतीर्थमतमुज्झितदोषजातं
स्वानन्ददायि शिथिलीकृतमत्तमायि ।
सन्मानसंभृतमतिप्रियमच्युतस्य
सन्मानसं सततमुज्ज्वलयच्चकास्ति ॥

इति श्रीविद्यामान्यतीर्थप्रणीतायाः
सहस्रदृषण्यपरपर्यायाया
अद्वैततत्त्वसुधासमीक्षायाः
प्रथमो भागः ॥

—※—